॥ श्रीः ॥

# सुभाषितम्

## "आरब्धम् उत्तमजनाः न परित्यजन्ति ।"

लोके त्रिविधाः जनाः भवन्ति । अधमः मध्यमः उत्तमः च इति ।

"एतत्कार्यारम्भे विघ्नाः आपतेयुः, फलानि सिद्धानि न भवेयुः, कदाचित् अनर्थाः अपि सम्भवेयुः, अतः तूष्णींभावः उचितः, कार्यारम्भः एव मास्तु" इति चिन्तयन् यः कार्यम् एव न आरभते सः अधमः ।

"कश्चित् सहसा कार्यस्य आरम्भं करोति । द्वित्राणि पदानि अपि अग्रे न्यस्यति । तदा विघ्नम् अनुभवति, अपवादं वा शृणोति । हताशः सन् कार्यम् एव त्यजति अथवा स्थगयति" एषः मध्यमः भवितुम् अर्हति ।

"विघ्नाः पुनः पुनः शिरसि आपतन्ति । विघ्नसमूहात् अपि अभीतः सन् यः कार्यस्य पारं गच्छति एषः उत्तमः । भगीरथः अत्र दृष्टान्तः । भगीरथः गङ्गां भूलोकद्वारा पातालम् आनेतुं प्रथमं ब्रह्माणम् उद्दिश्य तपः चरति । अनन्तरं गङ्गां धर्तुं ईश्वरम् उद्दिश्य बहूनि वर्षाणि तपः चरति । स्वर्गात् पतन्ती गङ्गा शिवस्य जटायां विलीना । पुनः अपि ईश्वरं प्रति तपः चरति । जटातः आगच्छन्तीं गङ्गां जह्नुमहर्षिः पीतवान् । पुनः अपि भगीरथः जह्नुं प्रार्थयते । नयति च पातालं प्रति गङ्गाम् । एतादृशं महात्मानं दृष्ट्वा एव भर्तृहरिः कथयति–

"विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
आरब्धम् उत्तमजनाः न परित्यजन्ति" इति ।



# चन्दमामा

जुलै - १९८४

*

## अन्तरङ्गम्



*


प्रतिकृति मूल्यम् रू. २-००
वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'

सञ्चालकः 'नागिरेड्डी'

भाषायाः अभ्यासे संवर्धने च सरलः प्रमुखः च उपायः नाम सम्भाषणम्। विना आयासं नूतनभाषां केवलं सम्भाषणेन एव अभ्यसितुं शक्नुमः। शिशुः अत्र दृष्टान्तः। गृहे मातापितरौ सहोदराः च परस्परं सम्भाषणं कुर्वन्ति। तेषां सम्भाषणं श्रुत्वा एव शिशुः क्रमशः शुद्धं निरर्गलं च वदति। तस्य पुस्तकम् न अपेक्षितम्, न वा व्याकरणम्। एषः सर्वेषाम् अनुभवः।

संस्कृतज्ञाः वयम् अपि यत्र यत्र मिलामः तत्र संस्कृतेन एव सम्भाषणं कुर्मः। यदि द्वौ त्रयः वा संस्कृतज्ञाः गृहे भवामः, प्रतिदिनं गृहे संस्कृतेन एव व्यवहराम। तेन अन्ये गृहसदस्याः पार्श्वगृहजनाः च संस्कृतज्ञाः भविष्यन्ति।

सम्पुटः–१ जुलै-८४ सञ्चिका–४

प्रतिकृतिमूल्यम्– रू.२/– वार्षिकं ग्राहकशुल्कम् रू.२४/–






## दूरं गच्छति चन्द्रमाः

भूमितः क्रमशः सुदूरं गच्छत् अस्ति चन्द्रमण्डलं, येन प्रतिशतमानं तत् लघुभूतं दृश्यते । एवं सुदूरं गच्छति चन्द्रमण्डले, खग्राससूर्यग्रहणं न भविष्यति । किन्तु एतत् ज्ञातव्यं यत् लक्षेभ्यः वर्षेभ्यः परम् एव एतत् प्रवर्तिष्यते इति ।



## घटेन प्रयाणम्

'स्पैन्' देशस्य द्वौ तरुणौ बृहदाकारं घटं सम्पादितवन्तौ । तस्मिन् घटे उपविश्य 'ईब्रो' नद्यां प्रयाणं सानन्दं सोत्साहं च कृतवन्तौ । प्रयाणं २३० 'किलोमीटर्' दूरपरिमितम् आसीत् ।



## नेपोलियन् महाशयस्य नौकाः

'फ्रेञ्च' देशस्य चक्रवर्तिनः 'नेपोलियन्' महाशयस्य, इंग्लण्ड-देशस्य नौकादलाधिपतेः "अड्मिरल् नेल्सन्" महाभागस्य च 'नैल' नद्यां १७९८ तमे वर्षे युद्धं प्रवृत्तम् । तदा नेल्सनः नेपोलियनस्य चतस्रः नौकाः मज्जितवान् । अलेग्जाण्ड्रिया-तीरस्य समीपे जलान्तः इदानीम् अन्विष्टाः ताः नौकाः किञ्चिदपि न जीर्णाः । तासां उद्धरणार्थं प्रयत्नः क्रियमाणः अस्ति ।

# भवन्तः जानन्ति वा ?

१. साहित्यार्थं नोबेल् पारितोषिकं प्राप्तेषु प्रथमः कः ?

२. शान्त्यर्थं नोबेल् पारितोषिकं प्राप्तेषु प्रथमः स्मर्यते वा ?

३. भौतिकशास्त्रे नोबेल् पारितोषिकं प्रथमं कः प्राप्तवान् ?

४. रसायनशास्त्रे प्रथमतया नोबेल् पारितोषिकं केन लब्धम् ?

५. वैद्यशास्त्रे नोबेल् पारितोषिकेण प्रथमतया कः सम्मानितः ?

(उत्तराणि ६४तमे पृष्ठे)



# विकलाङ्गाः

सुधीरः जन्मतः एव सुन्दरः बालकः। ग्रामीणाः तं दृष्ट्वा आकृष्टाः भवन्ति। सर्वेऽपि 'सुधीरः सुन्दरः' इति प्रशंसां कुर्वन्ति। एतेन सुधीरः गर्विष्ठः जातः। यदा सः युवकः जातः तदा अपि स्वभावे परिवर्तनं न जातम्।

तस्मिन् ग्रामे एका काणा बालिका आसीत्। एकः वक्रनासिकः बालकः, दुर्बलहस्तः भिक्षुकः, पङ्गुः वृद्धः च आसन्। सुधीरः एतान् विकलाङ्गान् यदा यदा पश्यति तदा सर्वदा कटुवचनैः तान् निन्दति, अपमानयति च। कदाचित् उद्देशपूर्वकं तेषां समीपं गत्वा विविध-बालिशचेष्टाभिः तान् पीडयति।

सुधीरस्य माता स्वपुत्रस्य एतादृशं व्यवहारं दृष्ट्वा खिन्ना भवति। यदाकदाचित् हित-वचनानि च उपदिशति– 'पुत्र! विकलाङ्गानां कृते सर्वदा साहाय्यं करणीयम्। उपहासः पीडा इत्यदिकं तु कदाऽपि न करणीयम्। केनापि कारणेन ते विकलाङ्गाः सञ्जाताः। अत्र तेषाम् अपराधः नास्ति एव। ते सर्वदा दयया द्रष्टव्याः। तेषां पीडनं तु महापापकरम्' इति। किन्तु एतानि वचनानि सुधीरः न शृणोति एव।

एकदा ते चत्वारः विकलाङ्गाः अपि एकत्र आसन्। सुधीरः तत्र गत्वा उपहासेन दुष्ट-चेष्टया च तान् बहु पीडितवान्। तेन कुपिताः ते सुधीरं ताडयितुम् एव आगत-वन्तः। किन्तु सुधीरः तान् उपहसन्, अट्ट-हासं च कुर्वन् ततः पलायितवान्।

तदा ते चत्वारः अपि आत्मनः असहा-यतां स्मृत्वा रोदनं कुर्वन्तः, कोपेन आक्रो-शन्तः उच्चैः उक्तवन्तः– 'अरे दुष्टः! वयं भवते किं कष्टं दत्तवन्तः? विनाकारणं



किमर्थम् अस्मान् पीडयति ? परपीडनस्य फलम् अवश्यम् अनुभोक्तव्यम् एव । अस्माकं एषः शापः भवन्तं कदाचित् बाधते एव, पश्यतु' इति।

तेषाम् एतद्वचनं श्रुत्वा सुधीरः हसन् उपेक्षां प्रदर्शितवान् । तथापि तस्य मनसि शापस्य काऽपि भीतिः प्रविष्टा । तेन च सुधीरस्य धैर्यम् एव कुण्ठितम् जातम् । ततः आरभ्य सुधीरः तान् उद्दिश्य पीडनम्, उपहासं च त्यक्तवान् ।

केषुचित् एव दिनेषु सुधीरस्य पिता ग्रामं त्यक्त्वा नगरं गतवान् । तत्रैव वासं कृतवान् च । सुधीरः यदा प्राप्तवयस्कः जातः तदा सुन्दर्या एकया कन्यया सह तस्य विवाहम् अपि कृतवान् ।

गच्छति काले, सुधीरस्य मातापितरौ दिवंगतौ । किन्तु पित्रा यथेष्टं सम्पत्तिः सम्पादिता आसीत् । अतः सुधीरस्य कष्टं न जातम् । सः सुखसन्तोषेण जीवनं यापयन् आसीत् ।

सुधीरः पत्नीं महत्या प्रीत्या पश्यति स्म । एकदा सा गर्भिणी जाता । नवमे मासे आसन्ने सति, सुधीरः पत्नीं तस्याः मातृगृहं प्रापय्य प्रत्यागतवान् । तस्य मनसि जनिष्यमाणस्य शिशोः एव चिन्ता ।

तद्दिने रात्रौ सुधीरः बहुकालपर्यन्तं निद्रां न प्राप्तवान् । तदा ग्रामस्य सर्वाः घटनाः अपि तस्य स्मृतिपटले आगत्य गताः । आत्मना कृतं विकलाङ्गानाम् अवहेलनं सः स्मृतवान्। 'कदाचित् पङ्गुःवृद्धः अन्यैः सह ताडयितुम् आगतवान् आसीत्' इत्यपि सः स्मृतवान् । शापवाक्यानि कर्णे प्रतिध्वनितानि । एतत्सर्वं स्मृत्वा मनः भयेन कम्पते स्म । क्रमेण सः चिन्तां कुर्वन् एव निद्रावशं गतः ।

अल्पे एव काले 'पत्नी पुत्रं प्रसूतवती' इति वार्ता आगता । सुधीरः पुत्रं द्रष्टुम् अत्युत्साहेन गतवान् । किन्तु पुत्रस्य एकम् एव नेत्रम् ! वक्रा नासिका, बलहीनः हस्तः ! सः पादेन पङ्गुः अपि !! एतादृशं पुत्रं दृष्ट्वा सुधीरः मूर्च्छां गतः ।

किन्तु सुधीरस्य पत्नी तु सन्तोषेण उक्तवती- 'पश्यतु, अस्माकं पुत्रः कथं सुन्दरः अस्ति ?' इति । सुधीरस्य पुरतः एव सा पुत्रं प्रीत्या

आलिङ्गितवती ।

काकः अपि स्वपुत्रं सुन्दरम् एव मन्यते । शिशुः यथाकथमपि भवतु, मातुः तु सः प्रियतरः एव। एतं विषयं स्मरन् सुधीरः 'भवत्याः वचनं सत्यम्। कीदृशः सुन्दरः एषः पुत्रः!' इति उक्त्वा दीर्घं निश्वसितवान्।

तद्दिनादारभ्य सुधीरः एकं विचित्रं दृष्टवान्। सुधीरस्य पत्नी, अन्यः यः कोऽपि वा 'शिशुः विकलाङ्गः' इति न उक्तवान्। सर्वे अपि 'शिशुः सुन्दरः अस्ति' इत्येव प्रशंसां कुर्वन्ति! 'अहं धनवान् इति कृत्वा बान्धवाः, ममकारेण पत्नी च शिशोः अवहेलनं न कुर्वन्ति' इति सुधीरः ज्ञातवान्।

यथा यथा दिनानि गतानि तथा तथा सुधीरस्य चिन्ता अपि वर्धते। "पुत्रः विकलाङ्गः इति तु सत्यम् एव। यदा एषः क्रीडितुं गच्छति, तदा अन्ये बालाः एतम् उपहसन्ति। अतः सर्वदा एषः बालः मम समीपे वा मातुः समीपे वा स्थापनीयः। यदा माता वा पिता वा पार्श्वे भवति तदा तु कोऽपि न उपहसति।" इत्येवं चिन्तयित्वा सुधीरः सर्वदा पुत्रं स्वसमीपे एव स्थापयति स्म।

बाल्ये विकलाङ्गानां उपहासः यदा कृतः तदा तैः कियत् सङ्कटम् अनुभूतं स्यात् इति इदानीं सुधीरः ज्ञातवान्। विकलाङ्गानां शापकारणतः एव मम एतादृशः पुत्रः



जातः इति सुधीरः निश्चितवान्।

एतेषु एव दिनेषु सुधीरस्य गृहस्य समीपे धर्मशालां एकः सन्यासी आगतवान्। जनाः वदन्ति स्म यत् 'एषः सन्यासी महात्मा अस्ति। अद्भुताः शक्तयः सन्यासिना सम्पादिताः सन्ति' इति।

सुधीरः सन्यासिनं स्वगृहम् आहूय सत्कृतवान्। अनन्तरं तस्मै स्वपुत्रं प्रदर्शितवान्।

सन्यासी बालकं दृष्ट्वा उक्तवान्– 'गृहदीपकः एषः पुत्रः! बहुभाग्यशाली भवान्' इति।

सुधीरः पुत्रं गृहस्य अन्तः प्रेषितवान्। सन्यासिनः पुरतः स्वकीयां मनोव्यथां निवेदितवान्। बाल्ये कृतम् अपराधं निवेदितवान्।

एतत्सर्वं श्रुत्वा सन्यासी एकक्षणं गम्भीरः जातः । किञ्चित्कालं नेत्रे निमील्य आलोच्य अनन्तरम् उक्तवान्– "भवान् शीघ्रम् एव ग्रामं गच्छतु। येषां विकलाङ्गानां अपमानः पूर्वं कृतः, तान् क्षमां प्रार्थयतु । किन्तु इदानीं पङ्गुः वृद्धः न जीवति । ग्रामे एकत्र तस्य स्मारकस्थलम् अस्ति । भवान् तत्र अपि गत्वा क्षमां प्रार्थयतु । एतेन भवतः पुत्रस्य विकलाङ्गता दूरीभविष्यति " इति ।

सुधीरः तद्दिने एव स्वग्रामं गतवान् । तत्र आत्मनः परिचयम् उक्त्वा क्षमां प्रार्थितवान् ।

तदा ते सर्वे उक्तवन्तः– "अयि भोः ! शत्रोः अपि अस्मादृशाः पुत्राः न भवन्तु" इति वयम् इच्छामः । अन्येषाम् अहितं चिन्तितं चेत् अस्माकम् एव अहितं भविष्यति । 'अस्माकं क्षमादानेन भवतः पुत्रस्य विकलाङ्गता अपगच्छति' इत्येतत् सत्यं चेत्, वयं मनःपूर्वकं भवन्तं क्षाम्यामः' इति ।

तेषां प्रीतिपूर्वकेण सद्व्यवहारेण सन्तुष्टः सुधीरः एकैकस्य अपि दश सुवर्णनाणकानि दत्तवान् । अनन्तरं वृद्धपङ्गोः स्मारकस्थानं गतवान् ।

"तात ! अहं उन्मत्तः सन् भवन्तं पङ्गुः इति उक्त्वा अपमानितवान् । भवन् कृपया क्षाम्यतु, मम पुत्रम् आशिषा अनुगृह्णातु" इति सः सगद्गदं प्रार्थितवान् ।

अपरस्मिन् क्षणे एव सुधीरस्य निद्रा भग्ना । "स्वप्ने वा मया अपमानिताः क्षमाम् अनुगृहितवन्तः" इति सः सन्तुष्टः अभवत् ।

एतदनन्तरं एकसप्ताहाभ्यन्तरे एव श्वशुरगृहतः वार्ता आगता–"पुत्रः जातः । प्रसवः ससुखम् आसीत् । शिशुः माता च कुशलिनौ" इति ।

सुधीरः सद्यः एव श्वशुरगृहं धावितवान् सुन्दरं कान्तिमन्तं पुत्रं दृष्ट्वा 'बाल्ये मया अपमानिताः चत्वारः विकलाङ्गाः अपि वस्तुतः क्षमाम् अनुगृहीतवन्तः । अतः एव सुन्दरः पुत्रः जातः" इति स्वपत्नीम् उक्तवान्- सन्तोषेण ।






[ पिङ्गलः अग्रजयोः वचनानुसारं नाविकनायकं स्वगृहम् आनीय सत्कृतवान् । पूर्वयोजनानुसारं नाविकनायकः अनुचराणां साहाय्येन पिङ्गलं बद्ध्वा नौकां नीतवान् । जीवदत्तलक्षदत्तौ तु गृहम् आगत्य मातरं तर्जयित्वा पिङ्गलेन सम्पादितं धनं मन्त्रस्यूतं च बलात्कारेण वशीकृतवन्तौ । ]

सन्तुष्टः जीवदत्तः लक्षदत्तः च पिङ्गलेन आनीतं धनस्यूतं त्वरया उद्घाटितवन्तौ । तत्रत्यानि अमूल्यानि वज्ररत्नमाणिक्यादीनि दृष्ट्वा तौ आश्चर्यचकितौ । जीवने अदृष्टपूर्वम् अतुलैश्वर्यम् !

'पिङ्गलः बहु धनं सम्पाद्य आगतवान्' इति तु तयोः विश्वासः आसीत् । किन्तु एतावत् ऐश्वर्यम् आनीतं स्यात् इति तु तौ स्वप्ने अपि कल्पयितुम् अशक्तौ आस्ताम् ।

ऐश्वर्यराशिं लुब्धदृष्ट्या पश्यन् जीवदत्तः उक्तवान्– 'एतेन ऐश्वर्येण न केवलम् अस्माकम्, अपि तु भाविन्याः सप्तपरम्परायाः अपि दारिद्र्यं निवारितं भविष्यति' इति ।

'आम्, अस्माकं समीपे एतावत् ऐश्वर्यम् अस्ति इति अवन्तिनगरस्य राजा यदि जानाति तर्हि सः स्वयम् अस्माकं समीपम् आगमिष्यति। 'पुत्रीं ददामि' इति उक्त्वा विवाहार्थम् आग्रहं करोति । महाराजस्य जामातृत्वं नाम किं सामान्यम् ?' इति उक्तवान् सन्तोषो-



यथाकथमपि जीवामः । वयं विवाहिताः वा भवेम, संन्यासं वा स्वीकुर्मः । अस्माकं विषये भवत्याः वात्सल्यं तु नास्ति एव। भवत्याः व्यवहारः कपटतापूर्णः । वयं सर्वं जानीमः । पिङ्गलः एव भवत्याः सर्वस्वम्। नयवचनैः अस्मान् वञ्चयित्वा, पित्रार्जिते ऐश्वर्ये भागं स्वीकर्तुम् इच्छति भवती" इति ।

'एतत् ऐश्वर्यं भवतोः पित्रार्जितं न । अपि तु पिङ्गलेन महता कष्टेन सम्पादितम् । भवन्तौ इदानीं तदपि वशीकृतवन्तौ । वृद्धा अहम् अत्र किमपि कर्तुं न शक्नोमि । अहम् एतावत् एव इच्छामि यत् 'मन्त्रस्यूतं मम कृते दत्वा गच्छन्तु' इति । यदि मम समीपे मन्त्रस्यूतः भविष्यति तर्हि मम गृहं गृहं गत्वा भिक्षाटनं न भविष्यति । भवन्तौ यदा अपेक्षितं तदा आगत्य भोजनं कर्तुं शक्नुतः । वृद्धायाः मम उपकारः कृतः चेत् भगवान् अपि सुप्रीतः भविष्यति । अतः कृपया मन्त्रस्यूतः दीयताम् ' इति उक्तवती माता ।

एतत् श्रुत्वा क्रुद्धः जीवदत्तः उक्तवान्— 'भवती भिक्षाटनं वा करोतु, मरणं वा प्राप्नोतु । तेन आवयोः किम् ? अद्य आरभ्य भवती आवयोः माता न । इतःपरं भवत्याः आवयोः च सम्बन्धः एव नास्ति'' इति ।

न्मत्तः लक्षदत्तः ।

माता पुत्रयोः सम्भाषणं सर्वं श्रुतवती । सा भविष्यविषयकं सुन्दरस्वप्नं कल्पयन्ती, स्वपुत्रयोः दुराचारं ताडनं निन्दनम् सर्वं विस्मृतवती । 'प्रियपुत्रौ ! एषा तु सन्तोषस्य वार्ता । इतःपरं वा भवन्तः दुष्टबुद्धिं त्यजन्तु । धनस्य वृथाव्ययम् अकृत्वा योग्यरीत्या जीवन्तु । सुखसन्तोषपूर्वकं गृहस्थजीवनं यापयन्तु । अहम् अपि भवतोः आश्रये स्थित्वा पौत्रप्रपौत्राणां लालनं कुर्वती शेषजीवनं निरातङ्कं यापयामि' इति !

मातुः एतद्वचनं श्रुत्वा उभौ अपि कुपितौ । जीवदत्तः कोपेन उक्तवान्– 'वयं

लक्षदत्तः अग्रजस्य वचनं पुष्टीकुर्वन्- 'अग्रज! सत्यम् एव उक्तवान् भवान् । पित्रर्जितां सम्पत्ति रहस्यं स्थापयित्वा पिङ्गलाय दातुं सिद्धा एषा सर्वदा आवाभ्यां सह वञ्चनापूर्णम् एव व्यवहारं कृतवती । किम् एतत् आवां विस्मरावः ? समग्रा सम्पत्तिः आवयोः वशे आगता इति ज्ञातवती । अतः मधुरवचनैः आवयोः सहानुभूतिं प्राप्तुम् आगतवती' इति ।

पुत्राणां समीपे प्रार्थनया वादेन वा किमपि प्रयोजनं नास्ति इति माता ज्ञातवती । अतः निराशा सा एकत्र भित्तिपार्श्वे उपविष्टवती ।

अनन्तरं जीवदत्तलक्षदत्तौ समग्रसम्पत्तेः विभागं कृतवन्तौ । किन्तु मन्त्रस्यूतविषये तयोः मध्ये विवादः समुत्पन्नः । विवादः तावान् उग्रः जातः यत् अन्ते परस्परं हननं कर्तुम् अपि तौ सन्नद्धौ !

तदा माता पुनः समीपम् आगत्य उक्तवती "विवादकारणेन परस्परनाशः कृतः चेत् कस्य कः लाभः ? पूर्वं बहु अनिष्टं कृतं स्यात् । तथापि अहं भवतोः नाशं द्रष्टुं न इच्छामि । यतः अहं जन्मदात्री माता अस्मि । मम कृते मन्त्रस्यूतस्य दाने एव उभयोः हितम् अस्ति । एतेन परस्परकलहः अपि निवारितः भविष्यति" इति ।

"तूष्णीं तिष्ठतु भवती । अधिकं मा प्रलपतु" इति मातरं तर्जयन् जीवदत्तः उक्तवान्-



"मन्त्रस्यूते मदीयं भागम् अहं स्वीकरोमि एव" इति । सः अन्तः गत्वा छुरिकाम् आनीय स्यूतम् अर्धं कर्तुम् आरब्धवान् ।

माता तं निवारयन्ती उक्तवती- 'एवं न करोतु पुत्र ! येन केनापि कारणेन एषः स्यूतः छिन्नः चेत् एतस्य महिमा एव नश्यति । यत्र कुत्रापि एषः स्यूतः अखण्डम् एव तिष्ठतु । द्वारम् आगतां लक्ष्मीं किमर्थम् अविवेकेन निवारयति ?" इति ।

"एवं चेत् मन्त्रस्यूतः मम एव अस्तु" इति स्यूतम् आकर्षन् उक्तवान् लक्षदत्तः ।

तदा जीवदत्तः कोपेन उक्तवान्—"रे दुष्ट ! अहं ज्येष्ठः पुत्रः । 'महत्वपूर्णानि वस्तूनि ज्येष्ठपुत्रस्य अधीनानि भवेयुः' इति शास्त्राणि



स्मृतयः च विना अभिप्रायभेदं वदन्ति । अन्यच्च एतदपि स्मरतु– 'पिङ्गलस्य ऐश्वर्यं वशीकर्तुम् उपायम् अहम् एव सूचितवान्'। एतावत्पर्यन्तं भवान् मम वचनम् अनुसरति स्म । इदानीम् ऐश्वर्यं दृष्ट्वा लुब्धः भवान् सर्वम् अपि आत्मनः कृते एव इच्छति । 'लोभः पापस्य कारणम्' इति न विस्मरतु' इति ।

तदा लक्षदत्तः जीवदत्तं निन्दन् उक्तवान्– 'भवतः शास्त्राणि स्मृतयः च पार्श्वे भवन्तु नाम । स्वयम् आचारहीनस्य पुनः शास्त्राधारः ! कः अङ्गीकरोति एतत् सर्वम् ? अहं तु न अङ्गीकरोमि । मन्त्रस्यूतः मम आवश्यकः एव' इति ।

एवं तयोः विवादः बहुकालपर्यन्तं प्रचलन् आसीत् । तदा नगररक्षकः कश्चित् भटः एतत्सर्वं श्रुतवान् । सः ऐश्वर्यविषये मन्त्रस्यूतविषये च सम्पूर्णं ज्ञातवान् । सद्यः एव महाराजसमीपं गत्वा सर्वं वृत्तान्तं महाराजाय निवेदितवान् ।

अवन्तिराजः तु स्वभावतः एव कृपणः दुष्टः च । ऐश्वर्यस्य वार्तां श्रुत्वा तस्य मनसि आशा समुत्पन्ना । सः सेनानायकं आज्ञापितवान्– 'इदानीम् एव गत्वा तौ सहोदरौ, तदीयानि ऐश्वर्याणि, गृहस्य अमूल्यवस्तूनि च आनयतु' इति ।

महाराजस्य आज्ञानुसारं सेनानायकः कैश्चित् सैनिकैः सह गत्वा, जीवदत्तस्य लक्षदत्तस्य च बन्धनं कृतवान् । अनन्तरं गृहे सर्वत्र अन्विष्य ऐश्वर्यं मन्त्रस्यूतं च वशीकृत्य महाराजस्य पुरतः स्थापितवान् ।

अपारम् ऐश्वर्यं दृष्ट्वा राजा चकितः । सः नेत्रे यथासाध्यम् उन्मील्य दृष्टवान् ।

"एतत् ऐश्वर्यं कथं लब्धम् ?" इति राजा तौ सहोदरौ पृष्टवान् । वस्तुस्थितिं वक्तुम् उभौ अपि न सिद्धौ । "सत्यं वदामः चेत् ऐश्वर्यं मन्त्रस्यूतं च राजा वशीकरोति" इति तयोः भीतिः । अतः बहुवारं पृष्टं चेदपि तौ सत्यं न उक्तवन्तौ । तदा राजा भटान् आज्ञापितवान्– 'कशया ताडयतु' इति । भटाः कशां गृहीत्वा आगतवन्तः । कशां दृष्ट्वा एव उभयोः अपि

भयं समुत्पन्नम् । भटाः एकैकम् अपि गृहीत्वा ताडयितुम् आरब्धवन्तः । तदा आदितः अन्त-पर्यन्तं कथा तयोः मुखतः आगता ।

तदा सन्तुष्टः राजा उक्तवान्- "तर्हि एषा सम्पत्तिः वस्तुतः भवतोः न । राज्ये नियमः अस्ति यत्–"यस्याः सम्पत्तेः स्वामी न भवति सा सम्पत्तिः राज्यस्य अधीना भवेत् इति । भवतोः सहोदरः तु दासरूपेण विक्रीतः। अतः अत्रत्यसम्पत्तौ दासस्य तस्य अधिकारः तु नास्ति एव । एवं चेत् एषा सम्पत्तिः राज्याधीना भवेत्। एतादृशसम्पत्तिं विभक्तुं भवन्तौ प्रयत्नं कृतवन्तौ। न अधिकारिणं निवेदितवन्तौ । भवतोः एत-दपराधस्य कृते विंशतिवर्षाणि कारागृहवासः दण्डः" इति ।

"महाप्रभो ! कृपया आवां त्यजतु । सा सम्पत्तिः वा सः मन्त्रस्यूतः वा आवयोः मास्तु एव । स्वातन्त्र्येण जीवनं यापयितुम् अनुमतिं ददातु। वने वा आवां यथाकथञ्चित् जीवावः" इति जीवदत्तः लक्षदत्तः च विनम्रं प्रार्थित-वन्तौ ।

किन्तु तौ त्यक्तुं राजा न इच्छति । "एतौ प्रजानां मध्ये गत्वा शासनविरोधिप्रचारं कुरुतः चेत् प्रजासु असन्तोषः उत्पद्येत । अथवा यस्य कस्यापि मान्त्रिकस्य स्नेहं सम्पाद्य तद्द्वारा राजानं मां घातयितुम् अपि एतौ सिद्धौ एव । यत्किमपि कर्तुं समर्थौ एतौ" इति राजा मनसि एव



चिन्तितवान् ।

अतः सः उक्तवान्– 'भवन्तौ स्वकीयम् अपराधं भ्रातृहिंसां च स्वयम् एव इदानीम् अङ्गीकृतवन्तौ । अतः अपराधः कृतः इति तु निश्चितः । कृतस्य अपराधस्य दण्डनं तु भवेत् एव । अतः भवतोः कारागृहवासः निश्चितः एव । भवतोः माता वृद्धा । अतः जीवितान्तं यावत् तस्याः कृते मासाशनरूपेन दशदीनाराः दीयन्ते" इति । एतं निर्णयम् उक्त्वा राजा उद्यानम् उद्दिश्य गतवान् एव ।

राजभटाः जीवदत्तलक्षदत्तयोः पादे पाशं बद्धवन्तः । तत्र एकम् अयोगोलं योजितवन्तः अनन्तरम् एकस्मिन् अन्धकारमये कारागृहे स्थापयित्वा बहिः कीलितवन्तः ।

तदा जीवदत्तः सहोदरं उक्तवान्- "पश्यतु! आवयोः दौर्भाग्यम् । आवां सहोदरं मातरं च वञ्चितवन्तौ । अक्षम्यम् अपराधं कृतवन्तौ । अतः एषा दुर्गतिः प्राप्ता" इति ।

'मन्त्रस्यूतः मातुः कृते दत्तः चेत् एवं न भवति स्म । मन्त्रस्यूतः इदानीम् आवयोः अपि नास्ति, मातुः अपि नास्ति । परस्पर-कलहेन सम्पत्तिः अपि नष्टा' इति लक्ष्यदत्तः खेदं प्रकटितवान् । एवं तौ निद्रां कृतवन्तौ ।

सहोदरयोः वञ्चनया वञ्चितः पिङ्गलः नाविकनायकस्य वशे दासरूपेण आसीत् किल ! नाविकनायकः एतं पिङ्गलम् इतर-दासैः सह एकत्र कोणे बन्धने स्थापितवान् । प्रातःकाले नौका ततः प्रस्थिता । नाविक-नायकस्य आज्ञानुसारं दासाः सर्वे नौका-दण्डं चालयितुम् आरब्धवन्तः । पिङ्गलः अपि एतस्मिन् कर्मणि संलग्नः ।

एषः नाविकनायकः महापुरुषः इव प्रति-भाति स्म । किन्तु वस्तुतः सः एकः महान् समुद्रचोरः । विक्रयणं निमित्तीकृत्य सः नौका-स्थानतः नौकास्थानं गच्छति स्म । तदा कस्यां नौकायां किं वस्तु आरोपितम् इति जानाति स्म । अनन्तरं समुद्रमध्ये तां नौकां लुण्ठयति स्म । एवं नौकां लुण्ठयित्वा तत्र-त्यान् जनान् निर्दयं समुद्रे मज्जयति स्म ।

'यदि कश्चित् सजीवं त्यजामि तर्हि सः अन्यत्र गत्वा मद्विषये वदति । तेन मम रहस्यं सर्वविदितं भवति' इति नाविकनायकः



चिन्तयति स्म। अतः एव सः सर्वान् क्रूरतया यमलोकं प्रेषयति स्म।

नौकायां बन्धने स्थितः पिङ्गलः भल्लूककेतुना पाठितं मन्त्रं स्मर्तुं बहु प्रयत्नं कृतवान्। किन्तु प्रयत्नशतेन अपि सः स्मर्तुं न शक्तवान्। हताशः सः जानाति 'अग्रजौ सम्पत्तिं वशीकर्तुम् इच्छन्तौ मां दासरूपेण नाविकनायकाय विक्रीतवन्तौ' इति। सः किमपि कर्तुं न समर्थः इदानीम्।

पिङ्गलः चिन्तयति 'इतःपरम् अग्रजौ गृहे विद्यमानां सम्पत्तिं वशीकृत्य दुर्व्यसनार्थे व्ययीकुरुतः। पुनरपि मातरं बहुधा पीडयतः' इति। 'दास्यतः विमोचनं कथम्' इति सहस्रवारं चिन्तिते अपि कोऽपि उपायः न स्फुरितः एव।

एवं स्थिते एकदा अनिरीक्षिततया समुद्रे महान् झंझावातः उद्भूतः। समुद्रे पर्वताकाराः तरङ्गाः समुत्पन्नाः। तरङ्गैः ताडिता नौका चण्डमारुते पतितं शुष्कपत्रम् इव जाता। नौकायाः परिस्थितिः इदानीम् डोलायमाना जाता। नाविकनायकः सर्वत्र अपायविषये अनुचरान्, दासान् च पूर्वसूचनां सूचयन् इतस्ततः सञ्चरति स्म। सः एकस्याः अनन्तरम् अपराम् आज्ञां ददाति।

तस्मिन् समये दूरे एका नौका झंझावातपीडिता जले निमज्जन्ती नाविकनायकेन दृष्टा।

नाविकनायकः दूरवीक्षकेण तां नौकां



परीक्षितवान्। सा च नौका विशाला विदेशीय-वाणिज्ये उपयुज्यमाना इव दृष्टा।

एतादृशनौकायाम् अपरिमितम् ऐश्वर्यं निश्चयेन भविष्यति इति नाविकनायकः जानाति एव।

'मम नौका इव सा अपि नौका अपाये पतिता अस्ति। अस्मिन् समये किञ्चित् साहसम् आचरामि चेत् तत्रत्या अपरिमिता सम्पत्तिः मम वशे भविष्यति' इति नाविकनायकः चिन्तितवान्। नाविकनायकस्य नौकायां विद्यमानाः अनुचराः एतादृशेषु साहसकार्येषु निपुणाः एव। वाणिज्यनौकायां विद्यमानाः तु केवलं नौकाचालने परिणताः, न तु एतादृशे कुटिलयुद्धे अभ्यस्ताः।'

एवं चिन्तयित्वा नाविकनायकः स्वसहचरान् सज्जीभवितुम् अज्ञप्तवान्। तदा ते सर्वे तस्यां झंझावातपरिस्थितौ अपि धनुर्बाणखड्गादीन् हस्ते गृहीत्वा तां वाणिज्यनौकां वशीकर्तुं सन्नद्धाः अभवन्।

पिङ्गलः सर्वशक्त्या नौकादण्डं निरन्तरं चालयन् असीत्। क्रमशः सा वाणिज्यनौका समीपम् आगता। नाविकनायकः तु स्व-प्रधानसहचरैः सह दूरवीक्षकस्य माहाय्येन परिस्थितिं परिशीलयन् आसीत्। तदा अकस्मात् भयेन कम्पमानः सः उच्चस्वरेण आक्रोशनं कुर्वन् आदेशं दत्तवान्– 'सा वाणिज्यनौका न। तदीयाः जनाः बाणं वस्त्रेण बद्ध्वा, तं ज्वालयित्वा क्षिपन्तः सन्ति। सर्वे त्वरयन्तु, बाणप्रयोगं कुर्वन्तु' इति।

नाविकनायकस्य वचनसमाप्तेः पूर्वम् एव तस्याः नौकातः ज्वलन्तः बाणाः एतन्नौकायाः उपरि आपतिताः। तेन च तेषां वस्त्रेषु अग्निः संलग्ना।

तदा नाविकनायकः भ्रमाधीनः इव आक्रोशनं कुर्वन्– 'सर्वान् दासान् बन्धविमुक्तान् कुर्वन्तु। ते इदानीम् खड्गान् स्वीकृत्य नौकारक्षणार्थं सज्जाः भवन्तु' इति पुनः पुनः उक्तवान्। (अनुवर्तते)






# बुद्धिपरिवर्तनम्

अन्यत्र कुत्रापि गन्तुम् अशक्तं, सर्वदा वृक्षशाखायां लम्बमानं वेतालाविष्टं शवं पुनरपि स्कन्धे आरोप्य, त्रिविक्रमः मौनेन श्मशानमार्गम् अनुसृतवान् । तदा शवे स्थितः वेतालः उक्तवान्– "अये महाराज ! भवान् एतादृशे मध्यरात्रे भयङ्करे श्मशानमार्गे गच्छन् अस्ति । भवतः प्रयत्नः कदाचित् सफलः अपि भवेत । किन्तु फलप्राप्तिसमये भवतः मनः एव परिवर्तितम् अपि भवेत् ? कदाचित् महाराजाः अपि अल्पानां विमर्शतः भीताः, पराक्रमेण सम्पादितं राज्यादिकं त्यक्त्वा पलायनं कुर्वन्ति । हस्तप्राप्तं विजयं तिरस्कुर्वन्ति । भवान् अपि तथा न आचरति इत्यत्र कः विश्वासः ? उदाहरणार्थं कीर्तिसेनमहाराजस्य कथां वदामि" इति । अनन्तरं कथा आरब्धा–

उत्कलनामके देशे गिरिपुरग्रामे मैथिली

# वेतालकथा



वासन्तिका इति भगिनीद्वयम् आसीत् । बाल्ये एव मातापितृविहीनं तत् भगिनीद्वयं पितामही एव पोषितवती । एषा पितामही अपि कदाचित् कालवशात् दिवं गता ।

मैथिली वासन्तिका उभे अपि सुन्दर्यौ एव । किन्तु विद्यायां मैथिली एव निपुणा । वासन्तिका तु गाने बहु प्रवीणा ।

एकदा वृष्ट्यभावात् उज्ज्वलदेशे क्षामः समुत्पन्नः। राजा विनयवर्मा प्रजानां हितार्थं यथाशक्ति व्यवस्थां कृतवान् । सर्वदा क्षामपरिहारकार्ये एव सः निमग्नः भवति स्म । तदानीम् एव उज्ज्वलदेशस्य बलहीनपरिस्थितेः दुर्लाभं स्वीकृत्य पार्श्वस्थ-वरालिदेशस्य राजा कीर्तिसेनः आक्रमणं कृतवान् । विनयवर्मा तु यथाशक्ति युद्धं कृत्वा अपि पराजितः । कीर्तिसेनः राजधानीम् आक्रम्य राजानं विनयवर्माणं कारागारे स्थापितवान् ।

कीर्तिसेनः अपि गुणवान् । सः उज्ज्वलदेशस्य क्षामपरिस्थितिं दृष्ट्वा खिन्नः । "इदानीम् एतस्य रक्षकः अहम् एव । अतः कष्टपरिहारः अपि मम एव कर्तव्यम्" इति सः चिन्तितवान् । अतः कैश्चित् सैनिकैः च सह देशे सर्वत्र गत्वा योग्यसाहाय्यं कर्तुम् आरब्धवान् ।

कीर्तिसेनः एवं पर्यटनं कुर्वन् गिरिपुरग्रामम् आगतवान् । तद्दिने एव वासन्तिका कुत्रापि न दृष्टा । प्रतिदिनम् इव अद्यापि जलम् आनेतुं नदीं गता सा न प्रत्यागता ।

मैथिली अनुजाम् अन्वेष्टुं प्रस्थिता । वासन्तिका कुत्रापि न दृष्टा । किन्तु तया नीतः घटः नदीतीरे लब्धः । घटं स्थापयित्वा नदीं गतां वासन्तिकाम् एकः दृष्टवान् आसीत् ।

नदी शुष्का आसीत् । केवलं तत्र तत्र गर्तेषु जलं तिष्ठति स्म । ततः जलम् आनेतव्यम् आसीत् । "एवं जलान्वेषणमग्नां वासन्तिकां, अस्मिन्नेव मार्गे गच्छन्तं कीर्तिसेनं च वयं दृष्टवन्तः" इति केचन उक्तवन्तः । कीर्तिसेनः एव वासन्तिकाम् अपहृतवान् स्यात् इति संशयम् अपि प्रकटितवन्तः ।

एतत् श्रुत्वा मैथिली व्यथिता । सा साक्षात् राजधानीं गतवती ! राजा सभायाम्

आसीत्। सा अपि साक्षात् सभां प्रविष्टवती।

कीर्तिसेनः प्रवृत्तं सर्वं श्रुत्वा उक्तवान्– 'चिन्ता मास्तु, भवत्याः भगिनीम् अहम् अन्विष्य ददामि। कस्यापि उपरि भवत्याः संशयः अस्ति वा?' इति।

'एकस्य उपरि मम संशयः अस्ति' इति उक्तवती मैथिली।

'कः सः?' इति पृष्टवान् कीर्तिसेनः।

'यः असहायाम् एकां अबलाम् अपहृत्य आगतवान्, सः एव मम संशयविषयः' इति मैथिली उक्तवती। कीर्तिसेनः आश्चर्यं प्रकटयन् उक्तवान्– 'भवती किमर्थं व्याजोक्त्या कथयति? सधैर्यं विषयं वदतु।'

'वदामि भोः, सर्वं वदामि। सर्वम् अपि सोढुं सिद्धा भूत्वा एव आगतवती अहम्। भवान् मां शिक्षयेत् इति भीतिः अपि नास्ति मम। भवतः उपरि एव मम संशयः' इति कोपेन उक्तवती मैथिली।

चकितः कीर्तिसेनः कोपेन पृष्टवान्– 'मम विषये संशयः?'

मैथिली दृढस्वरेण उक्तवती– 'आम्! भवान् कुपितः भवति इति अहम् पूर्वम् एव ज्ञातवती। भवतः उपरि केवलं मम एकस्याः संशयः न। गिरिपुरवासिनः सर्वे



अपि संशयं प्रकटितवन्तः। दीनावस्थायां स्थितां राजलक्ष्मीम् एव भवान् वशीकृतवान्। एतादृशः धर्मविधुरः भवान् सुन्दरीं तरुणीम् एकाकिनीं न अपहरति इत्यत्र कः विश्वासः? भवान् यदा नदीतीरं गच्छति स्म, तदा एव सा अपि अदृश्यतां गता' इति।

मैथिल्याः वचनं युक्तियुक्तम् आसीत्। सप्रमाणम् आसीत्। तर्कसहितम् आसीत्। एतादृशं वचनम् असत्यम् इति प्रतिपादयितुं कष्टं किल?

राजसभायां सर्वेषां पुरतः किम् उत्तरं दातव्यम् इति कीर्तिसेनः न ज्ञातवान्। मैथिल्याः वचने सत्यम् अस्तीति सभ्याः भ्रान्ताः सन्ति। एवं स्थिते सत्यम् उक्तं चेत् अपि न प्रयोजनम्!

सभ्याः राजभीत्या उक्तं तूष्णीं शृणुयुः। किन्तु हृदयपूर्वकं न अङ्गीकुर्युः एव ।

किञ्चित्कालं चिन्तयित्वा कीर्तिसेनः मैथिलीम् उक्तवान् 'भवत्याः भगिनी मया न अपहृता इति देवसाक्षितया वदामि । तस्याः अन्वेषणं मम आद्यं कर्तव्यम् । भवती अत्र विश्वासं स्थापयतु' इति । मैथिली गिरिपुरं प्रत्यागता ।

मैथिल्याः सौन्दर्येण धैर्येण साहसेन च कीर्तिसेनः आकृष्टः । 'वासन्तिकाम् अन्विष्य दत्वा अनन्तरं मैथिलीम् एव परिणेष्यामि' इति राजा चिन्तितवान् ।

मैथिली यदा गृहं प्रत्यागतवती तदा वासन्तिका गृहे एव आसीत् । सा सङ्गीतकलायाः सहपाठिनं देवालये परिणीय तेन सह आगतवती आसीत् । मैथिल्या पृष्टा वासन्तिका उक्तवती– 'यदि विवाहविषयम् अहं पूर्वम् एव वदामि तर्हि भवती न अङ्गीकरोति स्म । अपि च भवत्याः अपेक्षया पूर्वम् एव जायमानस्य मदीय-विवाहस्य विषयं वक्तुम् अपि मम लज्जा आसीत् ।

सहपाठिनः पितामही वृद्धा अस्वस्था च । सा मरणतः पूर्वं पौत्रस्य विवाहं द्रष्टुम् इच्छन्ती विवाहार्थम् आग्रहं करोति स्म । अतः मया एवं कृतम्' इति ।

मैथिली भगिनीम् उक्तवती– 'सहोदरि ! भवती न बाला, अपि तु प्रौढा । अतः विवाह-विषये भवती स्वतन्त्रा एव । भवत्या



यत्कृत तद्विषये किञ्चित् अपि दोषं न पश्यामि । एषः सहपाठी अपि भवत्याः अनुरूपः एव अस्ति । भवतीं भवत्याः पतिं च दृष्ट्वा मम महान् सन्तोषः । नूतनवधू-वरयोः मम शुभाशिषः ।'

मैथिली नूतनवधूवरयोः आशिषम् उक्त्वा राजधानीं गतवती । भगिन्याः वृत्तान्तम् उक्त्वा कीर्तिसेनं क्षमां याचितवती ।

कीर्तिसेनः हसन् उक्तवान्– 'अत्र क्षमाप्रार्थनायाः प्रश्नः एव नास्ति । अहम् इदानीं भवतां देशं त्यक्त्वा गन्तुं निश्चितवान् । विनयवर्मणे राज्यं प्रत्यर्पयामि । भवती माम् यत् उपकृतवती तत् भवती अपि न जानाति । भवती दीर्घायुष्मती भवतु' इति । अनन्तरम् अमूल्यानि रत्नाभरणादीनि दत्वा तां प्रेषितवान् ।

तद्दिने एव विनयवर्माणं बन्धनतः मोचयित्वा तस्मै राज्यं प्रत्यर्पितवान् । तेन सह स्नेहसन्धिं सम्पाद्य शीघ्रम् एव स्वराज्यं गतवान् ।

वेतालः एवं कथां समाप्य पृष्टवान्– 'महाराज ! कीर्तिसेनस्य मनसि यत् परिवर्तनं जातम् तत्र किं कारणम् ? पूर्वापरयोः विषये विचार्यमाणे, तस्य व्यवहारः विचित्रः इव भाति किल ? राजसभायाम् अपमानं कृतवतीं मैथिलीं परिणेतुं सः किमर्थं निश्चितवान् ? पुनश्च किमर्थं तं विषयं परित्यक्तवान् ? अन्यच्च विचित्रम्– शौर्येण सम्पादितं राज्यम् एव परित्यक्तवान् ! एतत् अविवेकं विना किम् अन्यत् ? एतेषां सन्देहानाम् उत्तरं



यदि भवान् न वदति , तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति' इति ।

तदा त्रिविक्रमः उक्तवान्–" कीर्तिसेनस्य गुणपरिवर्तने आश्चर्यं किमपि नास्ति । गुणानुरूपः तस्य व्यवहारः अस्ति ।

दुष्टं बुद्धिहीनं च राजानम् आक्रम्य शत्रुराजः यदि समर्थरीत्या शासनं करोति, तर्हि शत्रुराजस्य विषये अपि प्रजानां प्रीतिगौरवादयः वर्धन्ते । एतत् तु सर्वत्र समानम् । किन्तु कीर्तिसेनेन जितः उज्ज्वलदेशस्य राजा विनयवर्मा न दुष्टः, नवा बुद्धिहीनः । राज्यस्य उपरि आपतितं कष्टं निवारयितुं यथाशक्ति सः प्रयत्नं कुर्वन् आसीत् । अतः एव जनप्रियः अपि आसीत् । एतादृशं राजानं सिंहासनात् भ्रंशयन् पार्श्वदेशस्य राजा कदाऽपि प्रजानां गौरवाभिमानपात्रं न भवति एव ।

अवमानयन्ती मैथिली एतं विषयं राजसभायां यदा उक्तवती तदा कीर्तिसेनः ज्ञातवान् । अतः एव सः विनयवर्मणे राज्यं प्रत्यर्पितवान् । एतत् कीर्तिसेनस्य विवेकं राजनीतिचतुरतां च द्योतयति ।

राजसभायां सधैर्यम् आक्षेपं कुर्वत्याः मैथिल्याः सौन्दर्येण राजा मुग्धः । अतः सः तां परिणेतुम् इष्टवान् । अनन्तरम् एषा आलोचना अयुक्ता इति सः ज्ञातवान् । यतः वासन्तिकाविषये संशयम् एव आधारीकृत्य पूर्वापरविवेचनं प्रत्यक्षसाक्षिणं च विना, तदा मैथिल्या राज्ञः उपरि अपवादः आरोपितः । अतः एषा मैथिली धृष्टा इति राजा निश्चितवान् । सामान्यस्त्रियः एतादृशी धृष्टता न उचिता । तत्रापि राज्ञ्याः न भवेत् एव ।

एतेन कारणेन कीर्तिसेनः मैथिल्याः विवाहेच्छां त्यक्तवान् । विनयवर्मणा स्नेहसन्धिः सम्पादितः इति कृत्वा देशद्वये अपि तस्य कीर्तिः इदानीं प्रसृता" इति ।

एवम् उक्त्वा मौनम् आश्रितवान् । तदा वेतालः झटिति शवसहितः अदृश्यः भूत्वा शाखाम् अवलम्बितवान् ।





# उद्योगे नियुक्तिः

कनकगुप्तः महेन्द्रपुरीं परिपालयति स्म। तस्य कोशागारस्य अधिकारी पीताम्बरः। पीताम्बरः एकदा मन्त्रिणं निवेदितवान्- "कार्यम् अधिकम् अस्ति। अतः मम सहायकद्वयम् अपेक्षितम्" इति।

मन्त्री अनुमतिं दत्तवान्। "एकैकस्य अपि द्वादश दीनारान् मासिकवेतनं निश्चिनोतु" इति अपि उक्तवान्। पीताम्बरः कृतज्ञतां समर्प्य ततः निर्गतः।

अनन्तरं सः सहायकत्वेन त्रीन् पुरुषान् नियोजितवान्।

एतं विषयं ज्ञात्वा मन्त्री कुपितः। सः साक्षात् राजसमीपं गत्वा उक्तवान्- "महाप्रभो! कोशाधिकारी पीताम्बरः मम वचनं अतिक्रम्य व्यवहरति। द्वयोः सहायकयोः नियुक्तिविषये मम अनुमतिं सम्पादितवान्। किन्तु त्रयाणां कृते उद्योगं दत्तवान्" इति।

राजा कनकगुप्तः उक्तवान् – "एवं चेत् पीताम्बरः विचारणीयः। ज्येष्ठानाम् अधिकारिणां वचनस्य उल्लङ्घनम् अनुचितम् एव" इति। अनन्तरं राजा पीताम्बरम् आहूय - "मन्त्रिणः वचनस्य उल्लङ्घनं किमर्थं कृतम्?" इति पृष्टवान्।

"प्रभो! द्वयोः नियुक्तिः, एकैकस्य अपि द्वादशदीनारं मासिकवेतनं च मन्त्रिमहोदयेन अनुमतम् इति तु सत्यम् एव। अहं त्रयाणां कृते उद्योगं दत्तवान्। किन्तु एकैकस्य मासिकवेतनम् अष्टदीनाराः एव। अतः व्ययः अधिकः नास्ति। कोशागारस्य अपि हानिः नास्ति" इति उक्तवान् पीताम्बरः।

तदा राजा कोपेन पृष्टवान्– "सर्वत्र भवतः इष्टानुसारं व्यवहारः वा ? एतद्विषये अधिकारिणः अनुमतिः किमर्थं न स्वीकृता ?" इति ।

पीताम्बरः विनयेन उक्तवान् – "उद्योगे नियोजयितुं मन्त्रिमहोदयः जनद्वयं प्रेषितवान् । तौ दृष्ट्वा – "अत्र तृतीयः अस्ति चेत् एव युक्तम् इति अहं चिन्तितवान् । अतः तथा कृतवान्" इति ।

तदा मन्त्री मध्ये उक्तवान् – "प्रभो ! मया प्रेषितौ उभौ अपि विश्वासार्हौ, दक्षौ च । अतः एव नियुक्तिविषये अहं आसक्तिं प्रदर्शितवान्" इति ।

"एतत् युक्तम् एव । धनागारसम्बन्धि-विषये भवतः आसक्तिः युक्ता । धनागारस्य कर्मकराः विश्वासार्हाः समर्थाः च भवेयुः एव" इति कनकगुप्तः उक्तवान् ।

तदा पीताम्बरः "प्रभो ! मन्त्रिमहोदयेन प्रेषितयोः एकः तस्य मित्रस्य पुत्रः, अपरः महाराज्ञ्याः दूरबन्धुः" इति उक्तवान् ।

तदा राजा मन्दं हसन् उक्तवान्– "एतादृशाः कोशागारे लघु-उद्योगार्थम् अनर्हाः इति किल भवतः अभिप्रायः ?" इति ।

"प्रभो, एषा अर्हतायाः समस्या न धनिकानां पुत्राः सश्रमं कार्यं कर्तुं न शक्नुवन्ति । मम तु सश्रमकार्यार्थम् एकः अपेक्षितः । अतः तृतीयम् एकं उद्योगे नियोजितवान् । किन्तु यथा अधिकः व्ययः न भवेत् तथा जागरूकता आश्रिता मया" इति उक्तवान् पीताम्बरः ।

राजा मन्त्रिणः मुखं दृष्टवान् । मन्त्री लज्जया शिरः अवनमितवान् ।

तदा आरभ्य राजा– "उद्योगनियुक्ति-समये पक्षपातः न करणीयः । कार्यस्य आवश्यकतां अनुसृत्य समर्थः एव उद्योगे नियोजनीयः" इति शासनं कृतवान् ।





# अति सर्वत्र वर्जयेत्

एकः ग्रामः। तत्र आदित्यः इति एकः युवकः। तस्य पत्नी विमला। आदित्यः अतिवक्ता। सः सर्वदा अधिकसम्भाषणं करोति। आदित्यस्य एतं स्वभावं विमला न इच्छति। यदा सः उक्तम् एव विषयं पुनः पुनः वदति, तदा तस्याः जुगुप्सा भवति। अतः सा पतिम् उक्तवती- 'कृपया एवं सम्भाषणं न करोतु। यावत् अपेक्षितं तावदेव सम्भाषणं करोतु' इति। परन्तु तेन प्रयोजनं न जातम्। आदित्यः पूर्ववत् एव सम्भाषणं करोति। इदानीं विमला कुपिता। सा पतिं तर्जितवती। परन्तु तेन अपि प्रयोजनं न अभवत्। एतेन प्रसङ्गेन खिन्ना विमला 'पत्या सह सम्भाषणम् एव न करोमि' इति निश्चयं कृतवती। अनन्तरं न केवलं पत्या सह, परन्तु अन्यैः सह अपि सम्भाषणं न करोति स्म। केवलं 'आम्, न' इति पदद्वयम् एव वदति स्म।

एकदा विमलायाः सख्याः विवाहः निश्चितः। विमला तदर्थं नगरं गन्तुम् इच्छति। एतं विषयं ज्ञात्वा आदित्यः उक्तवान्– "सख्याः विवाहः किल! तर्हि भवत्या अवश्यं गन्तव्यम्। बान्धवानाम् अपेक्षया स्नेहिताः एव श्रेष्ठाः, यतः बान्धवानां मध्ये तु परस्परं कलहः भवति। ते सर्वे स्वार्थपरायणाः भवन्ति। परन्तु स्नेहिताः कष्टकाले अपि अस्माभिः सह एव तिष्ठन्ति। अतः स्नेहिताः कदा अपि न विस्मर्तव्याः। स्नेहितानां सखीनां च गृहस्य विशेषकार्यक्रमेषु अस्माभिः गन्तव्यम् एव। भवती अवश्यं गच्छतु' इति

"गच्छतु, इति एकं पदं वक्तुम् एतावत् भाषणं करणीयं वा?" कुपिता विमला एवम् उक्त्वा सखीभिः सह विवाहार्थं प्रस्थितवती।

विवाहसमारम्भे विमला अधिकसम्भाषणं न कृतवती। स्वसखीं वधूं दृष्ट्वा किञ्चित्



सम्भाषणं कृतवती । अनन्तरम् एकत्र मौनम् उपविष्टवती ।

विमलायाः काश्चित् परिचिताः तया सह सम्भाषणं कर्तुम् आरब्धवत्यः । किन्तु विमला ताभिः सह अपि सम्भाषणं न कृतवती। ताः सर्वाः चिन्तितवत्यः 'विमला इदानीं गर्विता सञ्जाता अस्ति' इति ।

भोजनं समाप्तम् । सखीम् उक्त्वा विमला प्रस्थितवती । ग्रामे एकः चतुष्पथः आसीत् । तत्र शकटाः भाटकार्थं मिलन्ति स्म । विमला तत्र आगतवती । तदा एव एकः शकटः तत्र आगतः । शकटे विमलायाः ग्रामीणा सुन्दराम्बा तस्याः पतिः च आसीत् । विमला तां दृष्टवती । तथापि उपेक्षया इव मुखं परिवर्त्य स्थितवती । 'एषा मम अवमाननं कृतवती' इति चिन्तयित्वा सुन्दराम्बा किमपि अनुक्त्वा ततः गतवती । अनन्तरं विमला बहुकालपर्यन्तं तत्र शकटार्थं प्रतीक्षां कृतवती । किन्तु एकोऽपि शकटः न आगतः । अन्ते सायंकालसमये एकः शकटः आगतः । किन्तु सः शाकटिकः ग्रामं प्रापयितुं द्विगुणितं भाटकं पृष्टवान् । अस्तु इति विमला अङ्गीकृतवती । सा शकटम् आरूढवती । शकटः प्रस्थितः ।

सामान्यतः अर्धमार्गः क्रान्तः असीत् । तदा सूर्यः अस्तङ्गतः। सर्वत्र अन्धकारः व्याप्तः। शकटः अग्रे गतः । इदानीं मार्गे अन्यः कोऽपि न सञ्चरति स्म । किञ्चित् अग्रे गत्वा झटिति शकटः स्थगितः ।

"किमर्थं भोः, शकटं स्थगितवान् ? किम् अभवत् ?" विमला शाकटिकं पृष्टवती ।

शाकटिकः स्वहस्तेन एकां छुरिकां प्रदर्श्य तां भापयन् कठोरस्वरेण उक्तवान्-"किमपि न । भवत्याः समीपे विद्यमानं धनम् आभरणं च निष्कास्य ददातु । नो चेत्..-.." इति ।

विमला भयेन मूका अभवत् । कम्पमाना सा शकटतः अवतीर्णवती । स्व-हस्ते विद्यमानानि शतं रूप्यकाणि तस्य कृते दत्तवती ।

"तावदेव न, कण्ठहारम् अपि निष्कासयतु । शीघ्रं, शीघ्रम्..... !" पुनः भापितवान् शाकटिकः । विमलायाः नेत्रयोः अश्रूणि आग-

तानि । सा कण्ठहारं निष्कासयितुम् प्रयत्नं कृतवती ।

तदा तस्मिन् एव मार्गे नगरतः वेगेन आगच्छन् एकः शकटः दृष्टः ।

झटिति शाकटिकः विमलायाः कण्ठे हस्तं संस्थाप्य कण्ठहारं बलेन आकृष्टवान् । तेन सः कण्ठहारः छिन्नः भूत्वा भूमौ पतितः ।

तदा सर्वत्र अन्धकारः आसीत् । अधः पतितः कण्ठहारः कुत्र अस्ति इति शाकटिकः न ज्ञातवान् । तम् अन्वेष्टुं भीतः सः तद्विषये आशां त्यक्त्वा शकटे उपविश्य नगरं प्रति प्रस्थितवान् ।

विमला कण्ठहारम् अन्विष्टवती । तं अञ्चले बध्वा, पादाभ्याम् स्वग्रामं प्राप्तवती ।

सा आदित्यं सर्वं विषयम् उक्तवती । तत् श्रुत्वा सः– "कीदृशम् अकार्यं कृतवती ! भवती सुन्दराम्बया सह किमर्थं सम्भाषणं न कृतवती? तया सह आगन्तव्यम् आसीत् ! तथा चेत् सुरक्षितं गृहम् प्राप्तुं शक्यम् आसीत् । अत्र मया एव दोषः कृतः । भवतीम् एकाकिनीं प्रेषितवान् किल ! सः प्रथमः दोषः । भवत्याः हस्ते अहं शतं रूप्यकाणि दत्तवान् । सः द्वितीयः दोषः । सुवर्णस्य कण्ठहारं भवत्याः कृते दत्तवान् किल, सः तृतीयः दोषः । 'भवती नगरं गच्छति, तत्र किमपि क्रेतव्यं भवेत् । तदर्थं धनम् आवश्यकं भवेत् इति कृत्वा अहं शतं





रूप्यकाणि दत्तवान् । नो चेत् ..." एवं किमपि किमपि वदन् आसीत् ।

तदा तेषां गृहस्य कर्मकरी रङ्गाम्बा तत्र आगतवती । तां दृष्ट्वा विमला पतिम् उक्तवती– "पर्याप्तं भोः भवतः भाषणम् ! दोषाणां पङ्क्तिम् अनन्तरं करोतु । प्रथमम् इदानीं छिन्नं कण्ठहारं समीकार्य आनयतु" इति ।

आदित्यः तस्मिन् ग्रामे विद्यमाने एकस्मिन् आभरणापणे उद्योगी । अद्य अपि सः उद्योगार्थं प्रस्थितवान् । अद्य तु धनं नष्टम् इति सः विमनस्कः आसीत्। अतः गमनसमये कण्ठहारं नेतुं विस्मृत्य एव गतवान् ।

आदित्यः आपणं प्राप्तवान् । तदा आपणम् एकः खल्वाटः ग्राहकः आगतवान् । आदित्यः तस्य कृते बहूनि आभरणानि प्रदर्शितवान् । किन्तु ग्राहकः पुनः पुनः वदति 'अन्यत् प्रदर्शयतु' इति ।

विविधकण्ठहारान् प्रदर्श्य आदित्यः 'पश्यतु, एते हाराः कियत्सुन्दराः सन्ति । शुद्धसुवर्णेन निर्मिताः एते हाराः" इति वर्णयितुम् आरब्धवान् ।

खल्वाटः उक्तवान्-'किं भोः, एतावत् वर्णनं करोति ? मम नेत्रं नास्ति वा? एते सर्वे हाराः स्थूलाः अरमणीयाः च सन्ति । अहम् एतादृशहारान् न इच्छामि । सूक्ष्महाराः सन्ति चेत् प्रदर्शयतु' इति ।

आदित्यः उक्तवान्-"परन्तु महोदय ! वस्तुतः येषाम् व्यवहारज्ञानं न्यूनं भवति ते एतादृशसूक्ष्महारान् स्वीकुर्वन्ति । बुद्धिमन्तः तु एतादृशस्थूल-हारान् एव स्वीकुर्वन्ति । किमर्थम् एवं वदामि इति चेत् अद्य एवम् एकः प्रसङ्गः अभवत्- इति आरभ्य सर्वम् उक्त्वा अनन्तरं- 'सः हारः सूक्ष्मः आसीत् किल । अतः छिन्नः। अहं तु तत् विस्मृत्य एव आगतवान् । इदानीं गृहं गन्तुं मम समयः नास्ति । नो चेत् अहं प्रदर्शयितुं शक्नोमि स्म" इति उक्तवान् ।

"भवतः भाषणं श्रोतुं ममाऽपि समयः नास्ति । भवतः आपणे सूक्ष्मः हारः नास्ति किल ! अस्तु अन्यत्र आन्विष्यामि–" एवम् उक्त्वा खल्वाटः ततः गतवान् ।

आपणे स्वकार्यं समाप्य सायम् आदित्यः गृहम् आगतवान्। विमला तं पृष्टवती- ''हारः समीकारितः वा ?''

''गृहतः हारं नेतुम् एव अहं विस्मृतवान् भोः। श्वः नयामि। स्मारयतु।'' आदित्यः उक्तवान्। विमला सम्भ्रमेण उक्तवती–

''किम्भोः ! हारः न प्राप्तः वा ? सः मनुष्यः हारं न प्रापितवान् वा ?''

''कः सः ? कस्य हस्ते हारं दत्तवती ? आदित्यः पृष्टवान्।

वास्तविकः विषयः एषः। मध्याह्ने एकः खल्वाटः आदित्यस्य गृहम् आगत्य विमलां उक्तवान्- ''भवत्याः पतिः छिन्नं हारं आनेतुं मां प्रेषितवान्। कृपया ददातु। !'' इति।

तस्य वचनेन विमलायाः मनसि विश्वासः उत्पन्नः। सा हारं तस्य हस्ते दत्तवती।

एतत् श्रुत्वा आदित्यः उक्तवान्- 'अहो ! कश्चन ग्राहकः आपणम् आगतवान् आसीत्। तस्य समीपे हारस्य वृत्तान्तम् उक्तवान् आसम्। सः वराकः चोरः इति इति कथम् अहं जानामि ?''

''भवान् सर्वैः सह किमर्थं गृहव्यवहार-विषये वार्तालापं करोति ? अतः एव एवं नष्टम् अभवत्। भवतः अति वक्तृत्वमेव अत्र कारणम्'' तम् आक्षिप्तवती विमला।

''भवत्याः अपराधः नास्ति वा ? भवती मूका इव स्थितवती इति कृत्वा एवम् अभवत्'' आदित्यः ताम् आक्षिप्तवान्।

तदा कर्मकरी रङ्गाम्बा आगत्य उक्तवती- 'अत्र द्वयोः अपि दोषः अस्ति। आरम्भे भवती अतिमौनं स्थितवती। अतः शतं रूप्यकाणि नष्टानि। भवतः सम्भाषणम् अधिकम् अभवत्। एवं कृत्वा हारः एव विनष्टः। सर्वदा सम्भषणे जागरूकता आवश्यकी। सर्वदा सन्दर्भानुगुणं सम्भाषणं करणीयम्! इति।

अनन्तरं उभौ अपि स्व-स्वभावं परिवर्तितवन्तौ।





# मूर्खराजः

बोधिसत्वः देवानाम् अधिपतिः आसीत्। तस्मिन् समये ब्रह्मदत्तः काशीं परिपालयति स्म।

ब्रह्मदत्तः बालभावं विहाय तारुण्ये पदं स्थापितवान्। बालबुद्ध्या सह यौवनमदः अधिकारमदः च वर्धितः। येन च देवान् एव सः न गणयति स्म। मानवान् तु तृणप्रायान् मन्यते स्म। देवेषु मानवेषु तिर्यग्जन्तुषु च को वा माम् अतिक्राम्यति? इति तस्य भावना। अतः सः मूर्तिमान् अहङ्कारः एव अभवत्।

यदृच्छया दृष्टान् जरठान् गजान् अश्वान् वृषभान् च स्वयं अन्यैः च ताडयति स्म। जीर्णान्, शकटान्, पेटिकाः आसनानि च अग्निसात्करोति स्म।

वृद्धान् तु स्वैरं भर्त्सयित्वा अपमानयति स्म। श्मश्रुलानां श्मश्रूणि अपकृत्य पीडयति स्म। एवं श्मश्रुलानां सोढुम् अशक्या दुरवस्था आसीत्। दुर्बलान् तु मार्गे इतस्ततः लुण्ठयति स्म। वृद्धस्त्रीणाम् अपि एषा एव गतिः। अतः युवराजं ब्रह्मदत्तं दूरतः दृष्ट्वा एव केचित् पलायन्ते स्म, केचित् गृहान्तः विलीनाः भवन्ति स्म। साधवः, सज्जनाः, दीनाः च तस्य नामश्रवणेन एव भीत्या कम्पन्ते स्म।

ब्रह्मदत्तस्य दुश्चेष्टाः दुरहङ्कारः च सीमाम् अतिक्रान्ताः। सः इन्द्रादीन् देवान् अपि अविगणय्य स्वैरं विहरति स्म। 'राजकुमारस्य भवतः एतत् न उचितम्' इति उपदेष्टा अपि कोऽपि न आसीत्। विरला हि राज्ञाम् उपदेष्टारः।

राक्षससदृशस्य ब्रह्मदत्तस्य स्वैरवृत्या सर्वे प्रजाजनाः अतीव कष्टम् अनुभूतवन्तः।



राजा एव स्वयं पीडयति चेत् कस्य अग्रतः रुद्यते ? अनन्यगत्या सर्वे अपि सर्वं दुःखं मौनेन सोढवन्तः । केचित् वृद्धमातापितरौ राज्यान्तरं प्रेषितवन्तः । अन्ये अन्यां व्यवस्थां कृतवन्तः । 'वृद्धमातापितृसेवातः वयं वञ्चिताः' इति सर्वे अपि अन्तरङ्गे व्यथाम् अनुभवन्ति स्म । तथापि 'जीवन् भद्राणि पश्यति' इति भावनया कालं यापयन्तः आसन् ।

भूलोके एषा गतिः चेत् स्वर्गलोके अपरा समस्या उद्भूता । वृद्धमातापितृसेवातः वञ्चिताः सर्वे अपि पापेन युक्ताः अभवन् । कर्तव्यच्युतिः पापाय किल भवति ? सर्वे मरणानन्तरं नरकं प्रविष्टवन्तः । स्वर्गस्य प्रवेष्टा तु कोऽपि न आसीत् । अतः स्वर्गः शून्यः संवृत्तः ।

स्वर्गे कर्मकराः निरुद्योगिनः अलसाः च अभवन् । देवाधिपतेः बोधिसत्वस्य चिन्ता समुत्पन्ना— 'कथम् एषा समस्या परिहरणीया?' इति ।

बहुधा विचिन्त्य देवेन्द्रः दरिद्रवृद्धरूपं धृतवान् । एकस्मिन् जीर्णे शकटे तक्रेण पूर्णं घटद्वयं स्थापितवान् । शकटस्य कृशौ द्वौ वृषभौ योजितवान् । तयोः वृषभयोः अस्थिपञ्जरमात्रम् आसीत् । एवं सज्जीकृत्य भूलोके मार्गे शकटेन प्रस्थितवान् इन्द्रः ।

तस्मिन् मार्गे एव राज्ञः शोभायात्रा आसीत् । ब्रह्मदत्तः राजपरिवारेण सह गजम् आरुह्य महता गर्वेण प्रस्थितवान् । शोभायात्रार्थं तोरणेन रङ्गवल्या च मार्गाः अलङ्कृताः आसन् ।

राजा ब्रह्मदत्तः शकटम् आरुह्य आगच्छन्तं वृद्धं दृष्ट्वा 'अरे वृद्ध ! दूरम् अपसरतु ! कियान् गर्वः ! मम अभिमुखम् आगच्छति !' इति क्रोधेन उच्चैः भर्त्सितवान् ।

'अये! किमर्थं राजा उच्चैः एवम् आक्रोशति ?' इति सर्वे अपि संमिलिताः आश्चर्यचकिताः अभवन् । वस्तुतः वृद्धः, शकटः, वृषभौ, तक्रघटौ च ब्रह्मदत्तेन विना केनापि

न दृष्टाः । अत्र च देवेन्द्रस्य माया एव कारणम् आसीत् ।

वृद्धः शकटं गजस्य उपरि नीतवान् । क्रोधेन प्रलपतः ब्रह्मदत्तस्य शिरसि तक्रघटं प्रक्षिप्तवान्, येन तक्रघटः भग्नः ।

भीत्या ब्रह्मदत्तः गजम् अन्यत्र धावयितुं प्रवृत्तः । तदा देवेन्द्रः द्वितीयं तक्रघटम् अपि तस्य शिरसि प्रक्षिप्तवान् । स्रुतेन तक्रेण ब्रह्मदत्तस्य शरीरम् आर्द्रम् अभवत् । ब्रह्मदत्तः क्रोधेन गर्जन् आसीत् ।

तत्क्षणम् एव शकटः वृषभौ च अदृश्यतां गताः । घटस्य कर्पराः अपि न दृष्टाः । इन्द्रः स्वीयरूपेण प्रत्यक्षः अभवत् ।

पादयोः पतितं ब्रह्मदत्तं दृष्ट्वा इन्द्रः उक्तवान्– 'राजन् ! ब्रह्मदत्त ! गर्वः कस्य ? किं भवतः उत मम ? गर्वेण अन्धः, मदेन मूर्छितः च किं भवान् अथवा अहम् ? भवतः यौवनं स्थिरम् इति भवान् किं मन्यते ? वार्धक्यं भवन्तं न स्पृशति इति किं भवान् भावयति ? येन च वृद्धान् जीर्णवस्तूनि च भवान् तिरस्करोति ।

भवतः दुश्चेष्टया सर्वाः अपि प्रजाः दुःखपङ्के निमग्नाः । भवतः दुर्व्यवहारतः भीताः सर्वे अपि स्वमातापितरौ राज्यान्तरं प्रेषितवन्तः । येन मातापितृसेवातः वञ्चिताः सर्वे अपि पापिनः अभवन् । पापिनः सर्वे नरकं गच्छन्तः सन्ति । अतः स्वर्गः शून्यः संवृत्तः । एतत् सर्वं भवान् किं जानाति ? गर्वेण वृथाकार्ये प्रवृत्तः भवान् । राजन्! अप्रमत्तः भवतु । इतःपरं अपथे मा प्रवर्तताम् । एतत् विपरीते तु वज्रायुधेन शिरः शतधा भग्नं भवेत्' इति । अनन्तरं इन्द्रः अन्तर्भूतः ।

ततःप्रभृति सः वृद्धान् आदरेण दृष्टवान् । राज्ये शान्तिः प्रसृता । देशान्तरं गताः वृद्धाः अपि प्रतिनिवृत्ताः । एवं ब्रह्मदत्तस्य मनःपरिवर्तनेन सर्वे निश्चिन्ताः अभवन् ।



# Enter the All India Camel Colour Contest '84

Last date: Oct. 31, 1984

Free entry stamp in every box
of camel art material.

Turn over for more labels
and timetable.

NAME ____________________

SCHOOL ____________________ CLASS ____________________

| DAY | 1ST PERIOD | 2ND PERIOD | 3RD PERIOD | 4TH PERIOD | INTERVAL | 5TH PERIOD | 6TH PERIOD | 7TH PERIOD | 8TH PERIOD |
|---|---|---|---|---|---|---|---|---|---|
| MON | | | | | | | | | |
| TUE | | | | | | | | | |
| WED | | | | | | | | | |
| THU | | | | | | | | | |
| FRI | | | | | | | | | |
| SAT | | | | | | | | | |







## कम्पनीयुगम्

अष्टादश-शतकस्य आरम्भे ईस्ट्-इण्डिया कम्पनी द्वारा भारतं स्ववशे आनेतुम् इंग्लण्डदेशेन प्रयत्नः कृतः। सहस्रशः आंग्लवणिजः भारतम् आगतवन्तः। किन्तु आंग्लवणिजां दौर्भाग्यं यत् तेषां वस्तूनां प्रथा अपि नास्ति! यतः भारतीयानि वस्तूनि एव तदपेक्षया उत्कृष्टानि।

अतः ईस्ट् इण्डिया कम्पनीजनाः वाममार्गम् अनुसृतवन्तः। गृहोद्यमिनाम् उपरि आक्रमणं कृत्वा तेषां यन्त्राणि नाशितवन्तः। जनान् ताडयित्वा विकलाङ्गान् कृतवन्तः। एवं क्रमेण आंग्लवणिजः वाणिज्ये भारतीयानां स्पर्धां निवारयन्ति स्म।





कम्पनीजनाः कुत्रचित् कृषिकार्यं अपि आरब्धवन्तः। एतदर्थं समीपस्थान् कर्मकरान् उद्योगे नियोजितवन्तः। कर्मकराः तु श्रद्धया कार्यं कुर्वन्ति स्म। एतस्य प्रतिफलम् पशुमारं ताडनम्! कृतस्य कार्यस्य कृते वेतनम् कम्पनीजनैः न दीयते स्म।



कम्पनीजनाः देशीयेभ्यः सामा-न्यराजेभ्यः अधिकारं वशीकृतवन्तः। तथैव भूस्वामिभ्यः भूमिं ऐश्वर्यादिकं च वशीकृतवन्तः। सर्वत्र कुयुक्तिः एव तेषां मार्गः। एवं ईस्ट् इण्डिया-कम्पनीजनाः वाणिज्यसंस्था-रूपेण सर्वाधिकारं प्रदर्शितवन्तः।

कम्पनीद्वारा वारन्हेस्टिंग्स् बङ्गाल-शासकत्वेन नियुक्तः। बंगालराजः नन्द-कुमारः हेस्टिंग्स्महोदयस्य उत्कोच-ग्राहित्वं सर्वत्र उद्घोषितवान्। न्याया-लयम् अपि गतवान्। किन्तु तदानीं न्यायाधीशः हेस्टिंग्सस्यमित्रम् एव! नन्दकुमारस्य उपरि एव चौर्यस्य आ-रोपः कृतः। नन्दकुमारः शूले आरो-पितः।





पुण्यस्थलसन्दर्शकानां साधुसन्या-सिनाम् उपरि अपि करः आरोपितः। एतेन साधुसन्यासिनः अपि कम्पनी-शासनस्य विरोधिनः सञ्जाताः। एते सन्यासिनः आंग्लशासन-विरोधितया कार्याणि कर्तुम् आरब्धवन्तः।

शासनविरोधिकार्ये भवानीपाठकः चौधुरानी इत्येतौ एव नायकौ। तत्रापि चौधुरानी असाधारणधीरा आसीत्। सा नौकायाम् एव गृहं निर्माय नौकायुद्धप्रवीणानां वीराणां साहाय्यं मार्गदर्शनं च करोति स्म। एतस्याः धैर्यं साहसं च असदृशम् आसीत्।






देवीचौधुरान्याः अनुचराः कम्पनी–नौकानां उपरि अकस्मात् आक्रमणं कुर्वन्ति स्म। नौकाः जले मज्जयित्वा मायया इव अदृश्याः भवन्ति स्म। अरण्ये प्रवहन्तीषु नदीषु ते निलीनाः भवन्ति स्म।

साधुसन्यासिनां विरोधानन्तरं कृषिकाणां विरोधः आरब्धः। कम्पनी-शासनेन अत्र दारुणा दमननीतिः अनुसृता। गोलकास्त्रबलेन विरोधः निर्मूलितः। एवं कम्पनीशासनस्य अधिकारः ग्रामपर्यन्तम् अपि व्याप्तः।






एवं चेदपि कम्पनीशासनं निष्कण्टकम् आसीत् इति न। कर्णाटके कित्तूरुराज्यस्य राजा मृतः। तस्य द्वौ पुत्रौ। पुत्रयोः परतया राज्ञी चेन्नम्मा एव शासनव्यवहारं पश्यति स्म। समर्थरीत्या सा प्रजापालनं कृतवती।

दुरदृष्टवशात् राजकुमारौ उभौ अपि दिवंगतौ। ज्येष्ठः युवराजः एकं दत्तकपुत्रं स्वीकृतवान् आसीत्। सः, दत्तपुत्रः इदानीम् अपि जीवति। तथापि कित्तूरुराज्यम् उत्तराधिकारिविहीनम्' इति कम्पनीशासनेन प्रकटितम्। कित्तूरुराज्यं वशीकर्तुं कम्पनी सैनिकाः आगताः। राज्ञी चेन्नम्मा स्वयं युद्धं कृतवती।





कित्तूरुसैनिकाः दुर्गस्य उपरि शतघ्नीं स्फोटितवन्तः। तेन ब्लाक् रिप्पन् नामकौ सेनानायकौ, थ्याकरे-नामकः कम्पनी प्रतिनिधिः च मृताः। १८२५ तमे संवत्सरे प्रचलिते अस्मिन् युद्धे कम्पनीसैनिकाः पराजिताः। किन्तु ते अनन्तरं महता सैन्येन आक्रमणं कृत्वा चेन्नम्मां बद्ध्वा कारागारे स्थापितवन्तः।



# वरत्रयम

पूर्वं रुद्रपुरे गोविन्दनामकः एकः गोपालकः आसीत् । तस्य पत्नी पूर्णिमा ।

गोविन्दः बाल्यात् आरभ्य मन्दः एव । शरीरं पुष्टं चेत् अपि बुद्धिः न वर्धिता । तस्य पत्नी तु अतीव बुद्धिमती । एतत् गोविन्दः अपि जानाति । अतः सः पत्नीम् अपृष्ट्वा किमपि कार्यं न करोति स्म ।

एतयोः दम्पत्योः ऐश्वर्यं नाम एकः लघु-कुटीरः धेनुत्रयं च । पूर्णिमा दधिक्षीरादीनां विक्रयणं करोति । सम्पादितेन तेन धनेन द्वयोः जीवनं निर्वहति स्म । गोविन्दः तु प्रातः गाः अरण्यं नयति । सायं गोभिः सह प्रत्यागच्छति । एतावत् एव तस्य दिनचर्या ।

अरण्ये एकः मुनिः वृक्षस्य अधः उपविश्य तपः करोति स्म । पार्श्वे एव तस्य आश्रमः आसीत् । गोविन्दः एतं मुनिं बहुकालतः पश्यन् अस्ति । तथापि सः मुनिना सह वार्तालापं न कृतवान् । वार्तालापः करणीयः इति विचारः अपि तस्य मनसि न उत्पन्नः । मुनिः सर्वदा पद्मासने उपविश्य नेत्रे निमील्य ध्यानं करोति ।

एकदा गोविन्दः यथापूर्वं गोचारणार्थम् अरण्यं गतवान् । तदा अकस्मात् वृष्टिसहितः चण्डमारुतः उत्पन्नः । वृक्षस्य शाखाः वायुना छिन्नाः पतिताः च । एतेन गावः सर्वाः भीताः । किञ्चित्कालानन्तरं वृष्टिवेगः न्यूनः जातः । इतःपरम् अत्र स्थितिः न उचिता इति चिन्तयित्वा गोविन्दः गोभिः सह गृहं प्रस्थितः ।

गोविन्दः मुनेः आश्रमसमीपम् आगतवान् । तत्र कुत्रापि मुनिं न दृष्टवान् । तत्र वृक्षस्य शाखाः इतस्ततः पतिताः आसन् । 'मुनेः का गतिः?' इति चिन्तयन् गोविन्दः समीपं



वा ? भवान् किमपि साहाय्यम् इच्छति वा ? उक्तं चेत् शिरसा निर्वहामि'' इति ।

तदा मुनिः उक्तवान्–''तिष्ठतु किञ्चित्, मम साहाय्यं किमपि न अपेक्षितम् । भवान् दयापरः करुणालुः च । किन्तु भवतः जीवनं निश्चिन्तं सुखमयं च नास्ति इति दर्शनेन एव भाति । अतः भवतः कृते वरत्रयं ददामि । अपेक्षितं पृच्छतु'' इति ।

गोविन्दः किञ्चित् चिन्तयित्वा उक्तवान्–''किं प्रष्टव्यम् इति अहं न जानामि । मम पत्नी एतद्विषये सम्यक् जानाति । तां पृष्ट्वा आगच्छामि वा ?'' इति ।

''अस्तु, तथैव करोतु । पुनः एतावद्दूरम् आगन्तव्यं नास्ति । भवता अपेक्षितः वरः तत्क्षणम् एव सिध्यति'' इति ।

गोविन्दः मुनिं नमस्कृत्य सन्तोषेण गृहं गतवान् । पत्न्यै पूर्णिमायै सर्वं वृत्तान्तं निवेदितवान् ।

पूर्णिमा 'वररूपेण किम् इच्छामि?' इति बहु चिन्तितवती । अन्ते उक्तवती- ''इदानीं तु वयं विद्यमानेषु वस्तुषु एव तृप्ताः सुखिनः च । किन्तु तपस्विना मुनिवरेण दत्तस्य वरस्य तिरस्कारः अपि न उचितः । अतः एकं सुदृढं दण्डम्, अमरां सम्मार्जनीं शाश्वतीं रज्जुं च वररूपेण इच्छतु । एतदेव पर्याप्तम्'' इति ।

गत्वा दृष्टवान् । शाखानाम् अधः मुनिः निश्चलं पतितः अस्ति ! एतत् दृष्ट्वा गोविन्दस्य मनः खिन्नम् ।

गोविन्दः शीघ्रं शाखाः-पार्श्वे क्षिप्त्वा मुनिं ततः बहिः आनीतवान् । आश्रमं नीत्वा स्वमत्यनुसारं प्रथमोपचारम् अपि कृतवान् । तदा जागरितचेतनः मुनिः गोविन्दं दृष्ट्वा आश्चर्येण पृष्टवान्– ''कः भवान् ? अत्र किं प्रवृत्तम् ? मम किं जातम् आसीत् ?'' इति ।

गोविन्दः वृष्टिप्रसङ्गस्य समग्रं विवरणं कृत्वा उक्तवान्- ''भवान् महातपस्वी । अतः एव स्थूलाः शाखाः उपरि पतिताः चेदपि भवतः व्रणादिकं न जातम् । इतःपरम् अहं गच्छामि

गोविन्दः सामान्यानि एतानि वस्तूनि वरितुं न इच्छति स्म । ऐश्वर्यं भवनम् इत्यादिकं याचनीयम् इति तस्य आशा आसीत् । किन्तु पत्न्याः बुद्धिमत्ताविषये तस्य अचलः विश्वासः । अतः पत्नीसूचनानुसारम् एव वरान् याचितवान् ।

तत्क्षणम् एव वस्तुत्रयम् अपि प्रत्यक्षम् अभवत् । पूर्णिमा दण्डं पत्युः हस्ते दत्तवती । रज्वा गाः बद्धवती । सम्मार्जन्या गृहं सम्मार्जितवती ।

अपरस्मिन् दिने गोविन्दः गोभिः सह अरण्यं गतवान् । मुनिः शाखाः निष्कास्य आश्रमं स्वच्छीकुर्वन् आसीत् । गोविन्दं दृष्ट्वा सः पृष्टवान्– "वररूपेण किं किम् याचितम् ?" इति ।

गोविन्दः मुनिं नमस्कृत्य उक्तवान् "एकां सम्मार्जनीम्, एकं दण्डं, सुदृढां रज्जुं च वररूपेण प्राप्तवान्" इति ।

मुनिः आश्चर्येण पृष्टवान्– "एतादृशलघुवस्तूनां कृते वरस्य विनियोगं कृतवान् वा ? वरेण अत्यमूल्यानि वस्तूनि प्राप्तुं शक्यम् आसीत् किल ?" इति ।

तदा गोविन्दः उक्तवान्– "अहं पत्नीवचनानुसारम् आचरितवान् । मम पत्नी निरुपयुक्तवचनानि न वदति" इति ।

मुनेः मनसि कुतूहलम् उत्पन्नम् । अतः सः गोविन्देन सह एव तस्य गृहं गतवान् । तत्र पूर्णिमां पृष्टवान्– "भवतोः लाभाय भवतु इति मया वरत्रयं दत्तम् । महता श्रमेण सम्पादिता



तपःशक्तिः एतदर्थं व्ययीकृता । भवती तु वर-रूपेण निष्प्रयोगिवस्तूनि एव अभिलषितवती । एवं किमर्थं कृतम् ? ऐश्वर्यादिकं प्राप्तुं शक्यम् आसीत् किल !'' इति ।

पूर्णिमा विनयेन उक्तवती- ''वरेण ऐश्वर्यं प्राप्तुं शक्यम् आसीत्, किन्तु अकस्मात् आगतम् ऐश्वर्यं मत्तताां जनयति । अन्ते तत् दुःखस्य कारणं भविष्यति '' इति भवान् जानाति एव । 'विना श्रमं प्राप्तम् ऐश्वर्यम् अहितस्य मूलम्' इति अभिज्ञाः सर्वदा वदन्ति । अतः अहम् ऐश्वर्यादिकं न याचितवती । अन्यच्च अत्याशा दुःखमूलं किल !'' इति ।

तदा मुनिः उक्तवान्- भवत्या उक्तं सत्यम् एव। किन्तु भवती अल्पवस्तूनां कृते वरस्य विनियोगं किमर्थं कृतवती'' इति ।

''श्रीमन् ! एतानि वस्तूनि न अल्पानि । भवतः वरप्रभावतः, सम्मार्जन्या मार्जितं चेत् गृहे लक्ष्मीतेजः प्रकाशते । अनन्तरं गृहे लक्ष्मीविरहः कदाऽपि न भविष्यति । दण्डः विपत्तिकाले सर्वदा रक्षणं करोति । वरप्रसादात् प्राप्ता रज्जुः सर्वदा गोभिः सह एव तिष्ठति । तेन च कदापि अस्माकं गृहे गोसम्पतिः न्यूना न भवति । एवं भवतः वरप्रसादेन आजीवनं न्यूनता न भविष्यति । यदि धनं भवनं वा याचामि तदा आवयोः आलस्यं वर्धते । ऐश्वर्येण मदः अपि वर्धेत''इति उक्तवती पूर्णिमा ।

पूर्णिमायाः बुद्धिमत्तां व्यवहारज्ञानं च ज्ञात्वा मुनिः सन्तुष्टः । ''मया वराः सुपात्राय एव दत्ताः इति सः चिन्तितवान् । अनन्तरं मुनिः उक्तवान्- वत्से ! भवती सद्गृहिणी बुद्धिमती च । भवत्याः ज्ञानं दृष्ट्वा मम महान् सन्तोषः अभवत् । परमेश्वरः भवतीं भवत्याः पतिं च रक्षतु'' । इति दम्पत्योः सुखजीवनम् अनुगृह्य मुनिः स्वपर्ण-शालां गतवान् ।





# अधिकारः

चन्दनदेशस्य राजकुमारः प्रतापवर्मा। प्राप्तवयस्कः सः एकदा देशाटनार्थं प्रस्थितवान्। सर्वत्र भ्रमणं कुर्वन् सः एकं ग्रामं प्राप्तवान्। तत्र भ्रमणसमये अकस्मात् एकः कण्टकः तस्य पादे लग्नः। रक्तस्रावः अपि आरब्धः। वेदनाम् असहमानः प्रतापवर्मा तत्रैव उपविश्य साहाय्यार्थम् इतस्ततः पश्यन् आसीत्।

सुहासिनी इति एका, कस्यचन कृषिकस्य पुत्री, किमपि कार्यार्थं तेन मार्गेण आगच्छति स्म। कष्टम् अनुभवन्तं प्रतापवर्माणं दृष्ट्वा तस्याः मनसि करुणा उत्पन्ना। सा इतस्ततः दृष्ट्वा समीपस्थगुल्मतः एकं कण्टकम् आनीतवती। तेन कण्टकेन प्रतापस्य पादे लग्नं कण्टकं बहिः निष्कासितवती। अन्यगुल्मतः औषधगुणयुक्तानि कानिचन पर्णानि आनीतवती। तानि निष्पीड्य आगतं रसं तस्य पादे स्थापितवती। स्व-शाटिकायाः अञ्चलं छित्वा तेन तस्य पादं बद्धवती।

कृतज्ञतापूर्वकं प्रतापवर्मा उक्तवान्--"भवत्या कृतं साहाय्यम् अहं कदाऽपि न विस्मरामि। भवती यत् इच्छति, प्रार्थयतु। अहं ददामि" इति।

"प्रथमं 'लग्नः कण्टकः कथं निष्कासनीयः' इति जानातु। अनन्तरं दानस्य विषयं चिन्तयतु" इति हसन्ती उक्तवती सुहासिनी।

'तस्य कः अर्थः? मया किं करणीयम् इति भवती अभिप्रैति?' प्रतापवर्मा पृष्टवान्।

"यः स्वकीयं कार्यं कर्तुम् एव न जानाति सः अन्यस्य किं साहाय्यं कुर्यात्? अतः भवान् प्रथमं स्वकीयं कार्यं स्वयं कर्तुं जानातु" इति



सुहासिनी उक्तवती।

"किन्तु तादृशपरिस्थितिः मम जीवने कदाऽपि न आगता। सर्वदा मम कार्यम् अन्यः कोऽपि, अन्या काऽपि वा करोति। इदानीं तु भवती साहाय्यं कृतवती। अस्तु, किम् इच्छति भवती? प्रार्थयतु"— प्रतापः उक्तवान्।

'महाराजः इव 'यत्किमपि प्रार्थयतु, ददामि' इति वदति किल! तर्हि मां महाराज्ञीं कर्तुं शक्नोति वा?" सहासं पृष्टवती सुहासिनी।

सुहासिन्याः स्निग्धसौन्दर्येण मुग्धः प्रतापवर्मा, ताम् एव पश्यन् उक्तवान्- 'भवती युक्ते जने एव एतं प्रश्नं पृष्टवती! अहम् एव अस्य देशस्य भावी महाराजः। मम नाम प्रतापवर्मा। अहं देशाटनं कुर्वन् अस्मि। अहं कुत्रापि भवादृशीं सुन्दरीं न दृष्टवान्। अवश्यं भवतीं परिणेष्यामि। तदा भवती महाराज्ञी भविष्यति।'

"अहं जानामि, केषांचन स्वभावः एवं भवति यत् सुन्दरीणां बालिकानां दर्शनमात्रेण एव तेषां मुखतः असत्यपरम्परा एव निस्सरति। भवान् अपि तादृशः एव!" परिहासपूर्वकम् उक्तवती सुहासिनी।

प्रतापवर्मा पृष्टवान्—"तर्हि अहमेव अस्य देशस्य भावी महाराजः इति प्रमाणीकर्तुं मया किं करणीयम?" इति।

'भवता एतत् कार्यं करणीयं यत् सूर्योदयः पश्चिमस्यां दिशि भवेत्, तथैव गङ्गानदी अस्माकं देशे प्रवहेत्। एवं यदि भवान् करोति तर्हि भवान् एव भावी महाराजः इति अङ्गीकरोमि। भवन्तं परिणेष्यामि च' इति सुहासिनी उक्तवती।

आश्चर्यचकितः प्रतापवर्मा उक्तवान्— 'एतादृशं कार्यं तु केनापि कर्तुं न शक्यम्। भवती केवलम् उपहासं करोति' इति।

'किमर्थं न शक्यम्? यस्य हस्ते अधिकारः अस्ति तेन सर्वं कर्तुं शक्यम्। भवान् तु केवलं बहुभाषी। अतः एव भवता न शक्यम्!' सुहासिनी गम्भीरतया उक्तवती।

किञ्चित्कालं चिन्तयित्वा प्रतापवर्मा उक्तवान्--'अस्तु, मम एकमासं कालावकाशं ददातु। भवत्या उक्तं साधयित्वा प्रदर्शयामि' इति।

'अस्तु, पश्यामि भवतः पराक्रमम् !' इति उक्त्वा सुहासिनी ततः प्रस्थिता ।

प्रतापवर्मा स्वराजधानीं प्रत्यागतवान् । सः स्वमन्त्रिणः आहूय उक्तवान्-'भोः मन्त्रिणः, सूर्योदयः पश्चिमस्यां दिशि भवेत् ! गङ्गानदी अस्माकं देशे प्रवहेत् । केन उपायेन एतत् कर्तुं शक्यते इति वदन्तु' इति ।

एतत् श्रुत्वा सर्वे अपि मन्त्रिणः विस्मिताः । ते उक्तवन्तः– भोः युवराज ! एवं कर्तुं यदा कदाऽपि वा शक्यते किम् ? देशसञ्चारसमये भवता मतिभ्रामकं फलं किमपि खादितं स्यात् । कालगतेः परिवर्तनं किं शक्यते वा ? अन्यत्र कुत्रचित् प्रवहन्तीं गङ्गानदीम् अत्र आनेतुं कः वा समर्थः भवेत् ? एतद्द्वयमपि असाध्यम् एव'' इति ।

''यदि एतत् असाध्यम्, तर्हि मम युवराजस्थानस्य अधिकारस्य वा कः अर्थः? एतत् भवेत् एव । नो चेत् अहं अधिकारम् एव न इच्छामि । सामान्यजनः इव अहम् अपि कुत्रचित् अज्ञातः जीवामि''– इति खिन्नः प्रतापवर्मा उक्तवान् ।

महाराजः एतं विषयं ज्ञातवान् । सः पुत्रम् उक्तवान्- ''भोः कुमार ! भवान् यत् वदति तत् कार्यद्वयम् अपि सर्वथा असाध्यम् एव ! एतत् श्रुत्वा 'राज्यभारम् अनिच्छन् भवान् एवम् उन्मत्तवचनम् इव यत्किमपि वदति वा' इति मम संशयः । किमर्थं भोः तादृशवैराग्यम्? किं सञ्जातम् ?'' इति ।

तदा तु प्रतापवर्मा सुहासिन्याः वृत्तान्तं





सर्वम् अपि पितरं निवेदितवान्।

सर्वं श्रुत्वा महाराजः सहासम् उक्तवान्— 'एतावदेव वा? काचन अप्रबुद्धा ग्रामीण-बालिका किमपि जल्पनं कृतवती इति कृत्वा भवान् एवं निश्चितवान् वा? एतत् युक्तं वा?' इति।

'परन्तु सा अप्रबुद्धा न, बहुबुद्धिमती अस्ति' प्रतापवर्मा उक्तवान्।

'एवं वा! तदपि पश्यामः' इति उक्त्वा महाराजः सुहासिनीम् आनेतुं भटान् प्रेषितवान्। भटाः सुहासिनीं सगौरवम् अन्तःपुरम् आनीतवन्तः।

यदा प्रतापवर्मा एव वस्तुतः युवराजः इति ज्ञातम्, तदा सुहासिनी विस्मिता। सा युवराजं सविनयम् उक्तवती— 'भोः श्रीमन्, अहम् अज्ञानेन यत्किमपि उक्तवती। कृपया क्षाम्यतु' इति।

प्रतापवर्मा उक्तवान्— 'तथा क्षन्तुं शक्यते वा? भवत्या उक्तं कार्यं साधयितुम् असमर्थः जातः। अस्तु, इदानीं भवत्या एव तानि कार्याणि साधनीयानि। नो चेत् भवतीं निर्दयं 'दण्डयामि' इति।

सुहासिनी सधैर्यम् उक्तवती— 'अवश्यं तथैव करोमि। किन्तु तत् कार्यं साधयितुं मम पर्याप्तः अधिकारः आवश्यकः।'

'तथा अधिकारं दातुम् अहं न शक्तः, यतः अहं केवलम् एतस्य देशस्य युवराजः, न तु महाराजः। परन्तु कीदृशः अधिकारः अपेक्षितः इति वदतु। अहम् पितरम् उक्त्वा तं दापयामि' इति प्रतापवर्मा उक्तवान्।

इदानीं महाराजः चिन्तामग्नः— 'एकस्याः ग्रामीणबालिकायाः हस्ते कथं अधिकारं ददामि? अधिकारः तु राज्ञ्याः हस्ते एव दातुं शक्यः। अधिकारः दातव्यः चेत् एषा राज्ञी भवेत् एव! राज्ञी भवति चेत् अनन्तरम् एतस्याः दण्डनं कथम्?' इति।

अन्ते एकः उपायः स्फुरितः। सः सुहासिनीम् उक्तवान्— 'अस्तु, अद्य आरभ्य भवती अस्य देशस्य राज्ञी। प्रतापवर्मा सैन्याधि-

कारी भविष्यति। एवं भवत्याः हस्ते अधिकारः दत्तः अस्ति। एकमासात्मके अवधौ भवत्या उक्तं कार्यं साधनीयम्। अनन्तरम् एव प्रतापवर्मा भवतीं परिणेष्यति ' इति।

सुहासिनी तत् अङ्गीकृतवती। 'अद्य आरभ्य सुहासिनी एव राज्ञी अस्ति। सा यथा आदिशति तथैव सर्वैः अपि वर्तितव्यम्' इति राज्ये सर्वत्र उद्घोषणं कृतम्।

राज्यव्यवहारे बहु-स्थलेषु, बहु-सन्दर्भेषु धनस्य दुर्व्ययः भवति स्म। एतत् ज्ञात्वा सुहासिनी तादृशं अनपेक्षितं धनव्ययं सर्वं स्थगितवती। तेन राज्यभाण्डागारे किञ्चित् अधिकं धनम् अवशिष्टम्। अनन्तरम् एषा नूतनराज्ञी प्रजानाम् उपरि आरोपितं करं न्यूनीकृतवती। अपि च अनेकानि प्रजाहितकार्याणि कृतवती। एवं सप्ताहाभ्यन्तरे एव सा प्रजानां प्रीतिपात्रम् अभवत्।

एवम् एव विंशतिदिनानि अतीतानि। तदा सुहासिनी महाराजं प्रतापवर्माणं च उक्तवती– 'अद्य मया सह नगरप्रदक्षिणार्थम् आगम्यताम्। मया यत् कार्यं कृतं तत् प्रदर्शयामि' इति।

त्रयः अपि वेशान्तरं धृत्वा नगरसञ्चारार्थं प्रस्थिताः। तदा सूर्योदयसमयः आसीत्। मार्गे एकः गच्छति स्म। सुहासिनी सूर्यं प्रदर्शयन्ती तं पृष्टवती– 'भोः! सा का



दिक्?' इति।

सः उक्तवान्–'पश्चिमा दिक्' इति।

महाराजस्य प्रतापवर्मणः च आश्चर्यस्य सीमा एव न अवशिष्टा। ते अन्यान् बहून् जनान् एवमेव प्रश्नं पृष्टवन्तः। ते सर्वे अपि उक्तवन्तः यत् यत्र सूर्योदयः दृश्यते सा पश्चिमा दिक् इति।

अनन्तरम् ते सर्वे नगरमध्यभागं गतवन्तः। तत्र तारानदी प्रवहति। नदीं प्रदर्शयन्ती सुहासिनी एकं पृष्टवती– 'एषा का नदी?'

सः उत्तरम् उक्तवान्– 'गङ्गानदी!' सर्वेषाम् अपि उत्तरम् 'एषा गङ्गानदी' इति।

इदानीं सुहासिनी सविनयं महाराजम्

उक्तवती– 'महाप्रभो, मया यत् उक्तं तत् कार्यं कृतम् अस्ति' इति।

''एतत् तु बहु विचित्रम् एव। कथं एतत् शक्यं जातम्?' इति विस्मयेन उक्तवान् महाराजः।

''महाप्रभो, प्रजानां कष्टं कीदृशं भवति इत्येतत् अहं सम्यक् जानामि। यतः अहम् अपि एका ग्रामीणा स्त्री। अतः अधिकारप्राप्ति—समनन्तरम् एव अहं प्रजाहितकार्याणि कृतवती। अतः एव सर्वाः प्रजाः सन्तुष्टाः। द्वितीयसप्ताहे तेषां मनस्सु मम विषये आराधनाभावः समुत्पन्नः। परिस्थितिः मदनुकूला संवृत्ता। तदा अहं राज्ये सर्वत्र उद्घोषणं कारितवती यत् 'भवतां महाराज्ञी अस्वस्था अस्ति। यदि भवन्तः सर्वे पूर्वदिशं पश्चिमदिक् इति वदन्ति, तारानदीं गङ्गानदीं इति च वदन्ति, तर्हि गङ्गादेवी, सूर्य भगवान् च प्रसन्नौ भूत्वा राज्ञ्याः स्वास्थ्यम् अनुग्रहीष्यतः' इति। जनाः तथैव व्यवहारम् आरब्धवन्तः'' इति सुहासिनी उक्तवती।

प्रतापवर्मा आश्चर्येण उक्तवान्– 'एतत् एतावत् सुलभम् इति अहं न ज्ञातवान् एव' इति।

महाराजः गम्भीरः सन् उक्तवान्– 'सुहासिनि! अहं भवतीं मम स्नुषाम् अङ्गीकरोमि। मदीयवचनपालनार्थं वा, भवत्याः बुद्धिमत्तां दृष्ट्वा वा अहम् एवं न कुर्वन् अस्मि। केषुचित् एव दिनेषु भवती प्रजानां प्रेम, आदरं, गौरवं च प्राप्तवती। अस्माकं देशे भवादृश्याः एव महाराज्ञ्याः आवश्यकता अस्ति। भवतीं युवराज्ञीं कृत्वा अहम् अपि प्रजानां प्रीतिपात्रं भवितुम् इच्छामि' इति।

अनन्तरम् अल्पे एव काले सुहासिन्या सह प्रतापवर्मणः विवाहः महता वैभवेन सम्पन्नः। प्रतापवर्मा राजा सञ्जातः। तथापि प्रतापवर्मा सेनापतिस्थाने एव तिष्ठन् सर्वं परिपालनसम्बन्धिभारं सुहासिन्याः उपरि एव स्थापितवान्। कालान्तरे सः 'उत्तमः राजा' इत्यपि प्रसिद्धः अभवत्।





# चतुरः दूतः

द्वीपेषु पुष्करद्वीपः क्रौञ्चद्वीपः च बहुप्रसिद्धौ, प्रतिवेशिनौ च। द्वीपान्तराणां सर्वे अपि राजानः क्रौञ्चद्वीपराजस्य मित्राणि एव। किन्तु पुष्करद्वीपस्य राजा तु क्रौञ्चद्वीपस्य राजानं न बहुमन्यते, न आद्रियते, प्रत्युत तिरस्कारेण पश्यति च। अन्येषाम् उपहसनम्, आत्मनः गर्वप्रदर्शनं च तस्य स्वभावः। क्रौञ्चद्वीपस्य राजा तु तम् अपि मित्रं कर्तुम् इच्छति स्म। 'तस्य मैत्रीं यदि सम्पादयामि, तदा मम साम्राज्यस्य च भीतिः नास्ति। पार्श्ववर्तिनोः आवयोः एव कलहः युद्धं च यदि भविष्यतः, तदा द्वयोः राज्ययोः अपि हानिः, प्रजानां कष्टं च' इति क्रौञ्चद्वीपराजस्य भावना।

'किन्तु आवयोः द्वयोः अपि कः मैत्रीम् उत्पादयेत्? अत्र कः समर्थः? कः प्रेषणीयः?' इति विचिन्त्य दूरदर्शिनामानं महामन्त्रिणम् एव पुष्करद्वीपं प्रति क्रौञ्चद्वीपराजः प्रेषितवान्।

प्रपञ्चे अहम् एव बुद्धिमान् इति पुष्करद्वीपराजस्य भावना। अतः आगतस्य महामन्त्रिणः अवमाननं कृत्वा प्रेषयामि इति सः चिन्तितवान्।

दूरदर्शी महाद्वारम् आगतवान्। द्वारपालाः झटिति एव द्वारं पिहितवन्तः। राजा अपि आगत्य उपहसन् उक्तवान्- 'भोः! महामन्त्रिन्! तत्र पश्यतु। शुनकानां प्रवेशार्थं रन्ध्रम् एकं दृश्यते किल? यदि अन्तः प्रवेष्टुम् इच्छति, तेन एव रन्ध्रेण भवान् अपि प्रविशतु' इति।

दूरदर्शी राजानं दूरतः एव नमस्कृत्य उक्तवान्- 'यथा आज्ञापयति महाप्रभो! वयं मनुष्याणां देशे मनुष्याणां द्वारेण एव प्रविशामः, शुनकानां देशे शुनकानां द्वारेण एव प्रविशामः। अस्माकं लक्ष्यं तु मैत्री एव। अतः शुनकद्वारेण एव प्रविशामि।'

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकटिता कथा।"

एतत् श्रुत्वा पुष्करराजस्य मुखं लज्जया विवर्णं जातम्। दूरदर्शिनं महाद्वारेण एव प्रवेश्य, सिंहासनस्य पार्श्वे एकस्मिन् आसन्दे उपवेशितवान्।

दूरदर्शी अतीव वामनः आसीत्। अतः तस्य अपेक्षया अपि आसन्दः एव महान् दृश्यते स्म। पुनः तम् अवमानयितुं राजा पृष्टवान्– 'भोः मन्त्रिन्! भवतः बुद्धिः इव भवतां राज्यस्य जनाः अपि वामनाः किम्?'

'राजन्! अस्माकं देशे वामनाः अपि सन्ति, प्रांशवः अपि सन्ति। अल्पेषु वामनाः प्रेष्यन्ते, उदारेषु प्रांशवः प्रेष्यन्ते। एषः च अस्माकं राज्यस्य नियमः। अतः भवतः समीपे अहं प्रेषितः' इति दूरदर्शी उत्तरं दत्तवान्।

उत्तरं श्रुत्वा राज्ञः कपोलयोः चपेटिकायाः अनुभवः अभवत्। एतं मन्त्रिणं कथं वा अवमानयामि इति चिन्तितवान् राजा।

तदा पुरुषम् एकं बद्ध्वा आनीय भटाः उक्तवन्तः– 'प्रभो! एषः क्रौञ्चदेशीयः। अत्र चौर्यं करोति स्म। तत् वयं दृष्टवन्तः। तत्क्षणे एव बद्ध्वा आनीतवन्तः' इति।

'भोः! क्रौञ्चमन्त्रिन्! भवतः राज्यस्थाः सर्वे अपि किं चोराः?' इति पुष्करराजः सोत्साहं पृष्टवान्।

क्रौञ्चमन्त्री उत्तरं दत्तवान्– 'प्रभो! एतद्देशस्य एषः प्रभावः यत् अत्र आगतानाम् अपि एतद्देशस्था बुद्धिः उत्पन्ना भवति। अस्माकं देशे चौर्यस्य वार्ता अपि न श्रूयते! भवदीयाः यदि आगच्छन्ति ते अपि चौर्यम् सर्वथा न कुर्वन्ति। अतः भवतः मैत्रीं सम्पादयितुम् अहम् अत्र आगतवान्।'

पराजितः पुष्करराजः उक्तवान्–'भवतः स्वामी अहं च इतःपरं सखायौ।'

एवं वामनः दूरदर्शी स्वकार्यभारं यशस्वितया निरूढवान्। ततः सन्तोषेण स्वराज्यं प्रतिनिवृत्तवान्।







# विष्णुकथा

कृत-त्रेतायुगयोः अनन्तरं द्वापरयुगम् आरब्धम्। तस्मिन् युगे बहवः राक्षसाः मनुष्यरूपेण जन्म प्राप्तवन्तः। तदा एतेषां दुष्टानां कारणतः भूभारः अधिकः जातः। भूदेवी भारं निर्वोढुम् असमर्था, विष्णुसमीपं गत्वा स्वकीयं कष्टं निवेदितवती।

'देवि! किञ्चित् कालं यावत् एतत् सोढव्यं भवत्या। अहं कृष्णरूपेण भूलोकम् अवतरामि। भवत्याः दुःखं दूरीकरोमि' इति विष्णुः ताम् अभयवचनानि उक्तवान्।

कालनेमिः नाम एकः राक्षसः अनादिकालतः विष्णोः प्रबलशत्रुः। सः द्वापरयुगे कंसः इति नाम्ना जन्म प्राप्तवान्। मधुरानगरस्य महाराजः उग्रसेनः एव कंसस्य पिता।

देवासुराणां युद्धे दानवानां नायकः भूत्वा विष्णुना सह यः युद्धं कृतवान्, सः विप्रचित्तिमहाराजः एव मगधाधिपः जरासन्धः भूत्वा जन्म प्राप्तवान्। जरासन्धः महाक्रूरी अतीव बलशाली च। एषः जरासन्धः सर्वान् महाराजान् बद्ध्वा आनीय, इष्टदेवाय भैरवाय बलिं ददाति स्म। कंसः एतस्य जरासन्धस्य जामाता आसीत्।

उग्रसेनस्य अनुजस्य पुत्री देवकी यदुवंशराजाय वसुदेवाय दत्ता। एतयोः विवाहसन्दर्भे एका विचित्रा घटना घटिता। नवविवाहितौ दम्पती रथे उपवेश्य कंसः गच्छन्



आसीत्। तदा 'एतस्याः देवक्याः अष्टमः गर्भः कंसं मारयिष्यति' इति अशरीरवाणी श्रुता।

एतत् श्रुत्वा कुपितः कंसः देवकीं मारयितुम् उद्युक्तः। तदा वसुदेवः सदीनं प्रार्थितवान्– 'देवक्याः अष्टमगर्भेण भवतः मरणं भविष्यति इति किल अशरीरवाणी श्रुता ? अहं एतस्याः सर्वान् शिशून् जातमात्रान् भवतः कृते अर्पयामि। कृपया एतां न मारयतु' इति।

कंसः एतत् अङ्गीकृतवान्। एतदनुसारं षट् शिशवः अपि कंसाय दत्ताः। कंसः तान् सर्वान् निर्दयं मारितवान्।

विष्णोः आज्ञानुसारं आदिशेषः देवक्याः गर्भे स्वकीयम् अंशं स्थापितवान्। किन्तु देवक्याः सप्तमः गर्भः न जीवितः। यतः नवमासतः पूर्वम् एव देवक्याः गर्भस्राव: जातः !

विष्णुः योगमायां– 'भवती नन्दगोपस्य पत्न्याः यशोदायाः गर्भे प्रविशतु'' इति आज्ञप्तवान्। योगमाया तथैव आचरितवती।

देवकी अष्टमवारं गर्भिणी जाता। कंसः ''एतस्याः एषः अष्टमः गर्भः एव मां मारयिष्यति। जातमात्रेण एषः नाशनीयः'' इति चिन्तयित्वा वसुदेवं देवकीं च कारागृहे स्थापितवान्।

श्रावणमासे कृष्णपक्षे अष्टमीतिथौ रोहिणीनक्षत्रे देवकी पुत्रं प्रसूतवती। तदा मध्यरात्रः आसीत्। रक्षकभटाः सर्वे गाढनिद्रायां निलीनाः आसन्।

एषः पुत्रः एव विष्णोः अवताररूपः कृष्णः। एतस्य जननसमये तालबद्धं द्वारम् उद्घाटितम्।

महाविष्णोः प्रेरणानुसारं वसुदेवः शिशुं कृष्णम् उन्नीय गोकुलं गतवान्। मार्गे यमुनानदी पूर्णा प्रवहति स्म। किन्तु वसुदेवस्य गमनार्थं सा मध्ये मार्गं कल्पितवती। वसुदेवः निरातङ्कं गोकुलं प्राप्तवान्।

तस्मिन् काले अत्र गोकुले सर्वे मायानिद्रया आवृताः आसन्। निद्रामग्ना यशोदा निद्रायाम्

एव एकां पुत्रीं प्रसूतवती। वसुदेवः यशोदायाः पार्श्वे शिशुं कृष्णं स्थापितवान्। गतप्राणप्रायं तं स्त्रीशिशुम् आनीय देवक्याः पार्श्वे स्थापितवान्। स च शिशुः अकस्मात् उच्चैः रोदनम् आरब्धवान्। एतत् श्रुत्वा रक्षकाः जागृताः। कंसाय वार्ता निवेदितवन्तः।

कंसः धावन् कारागारम् आगतवान्। शिशुं वध्यशिलासमीपं नीतवान्। तत्र यदा सः मारणार्थम् उद्युक्तः तदा तस्य हस्ततः च्युतेन शिशुना अन्तरिक्षे स्थित्वा 'अये कंस ! भवतः मारकः कुशली एव जीवति '' इति उक्तम्। दुर्गा–देव्याः रूपं धृत्वा आकाशे विलीनं च।

गोकुले कृष्णस्य जन्मना सर्वे आनन्द–तुन्दिलाः। कृष्णाष्टमीनाम्ना सर्वे तस्य जन्मोत्सवं आचरितवन्तः। कृष्णस्य जन्मतः पूर्वम् एव रोहिण्याः गर्भतः बलरामः अपि जन्म प्राप्तवान् आसीत्।

एकदा नारदः कंसस्य समीपम् आगत्य ''कंस ! भवान् उग्रसेनस्य पुत्रः चेदपि मूलतः कालनेमिः एव। भवतः मारणार्थं जातः विष्णुः कुत्रापि जीवति इति श्रुतं किल ? अतः तूष्णीं न तिष्ठतु। इदानीं एव कार्यशीलः भवतु'' इति उक्तवान्।

एतेन कंसः जागरितः। स्वपितरम् उग्र–सेनं कारागारे स्थापयित्वा सः सिंहासनम् आरूढवान्।

निरङ्कुशः कंसः सर्वान् राक्षसान्



आहूय, तान् आत्मीयान् कृतवान्। जगति विद्यमानानां सर्वेषां शिशूनां मारणार्थं कंसः पूतनीं प्रेषितवान्। सा पूतनी एतत् कार्यं सन्तोषेण अङ्गीकृतवती। नगरे सर्वान् शिशून् मारयन्ती सा, मानवस्त्री-वेशं धृत्वा गोकुलम् अपि गतवती। विषक्षीरं पाययितुम् इच्छन्ती सा कृष्णम् उन्नीतवती। कृष्णः तु तस्याः प्राणान् एव पीतवान्।

अनन्तरं कंसेन प्रेषितः तृणावर्तनामकः राक्षसः चण्डमारुतरूपं धृत्वा कृष्णम् आकाशं नीतवान्। कृष्णः तम् अपि मारितवान्। शकटरूपेण आगतं शकटासुरम् अपि कृष्णः मारितवान्। एवं कृष्णः दिने दिने वर्ध–मानः आसीत्।



बालः कृष्णः स्वभावतः अतीव चटुलः सः गृहं गृहं गच्छति। तत्र नवनीतं चोरयित्वा खादति।

कृष्णस्य लीलाविनोदाः असङ्ख्याः।कदाचित् सः दौष्ट्यम् अपि आचरति स्म। तथापि कृष्णस्य बाललीलां दृष्ट्वा सर्वे गोकुलवासिनः तुष्यन्ति स्म।

कृष्णस्य पीडा कदाचित् सोढुम् अशक्या भवति स्म। एकदा यशोदा कृष्णम् उलूखले बन्धितवती। कृष्णः उलूखलम् एव आकर्षन् द्वयोः वृक्षयोः मध्ये गतवान्। वृक्षद्वयम् अपि समूलं पातितवान्। तन्निमित्तेन गन्धर्वयोः शापविमोचनं कृतवान्।

'कृष्णेन मृत्तिका भक्षिता' इति श्रुत्वा यशोदा परीक्षार्थं मुखम् उद्घाटयितुम् उक्तवती। कृष्णः मुखं विशालं उद्घाटितवान्। तत्र विश्वरूपं दृष्ट्वा यशोदा आश्चर्यचकिता।

कालिङ्गसर्पस्य फणानां उपरि ताण्डवनृत्यं कृत्वा कृष्णः तस्य मर्दनम् अपि कृतवान्।

कदाचित् गोकुलनिवासिनः सर्वे वृन्दावनं गतवन्तः। तत्र गोवर्धनपर्वतं पूजितवन्तः। 'मम पूजा न कृता' इति चिन्तयित्वा इन्द्रः मुसलधारया जलवृष्टिं कृतवान्। गोकुले सर्वत्र हाहाकारः समुत्पन्नः। तदा श्रीकृष्णः कनिष्ठिकया गोवर्धनपर्वतम् उद्धृत्य गोपालकान् गाः च संरक्षितवान्। एतेन इन्द्रस्य अहङ्कारः भग्नः।

कृष्णः वेणुगोपालः भूत्वा गोपालनं कृतवान्। स्ववेणुवादनेन गाः गोपिकाः च परवशीकृतवान्। छद्मवेशेन आगतानां बहूनां राक्षसानां वधं कृतवान्। बलरामः अपि केषाञ्चित् राक्षसानां संहारं कृतवान्।

'कृष्ण-बलरामौ एव मम प्रबलवैरिणौ' इति कंसः निश्चितवान्। अतः तयोः मारणार्थम् 'धनुर्यागव्याजेन तौ आनयतु' इति उक्त्वा अक्रूरं प्रेषितवान्। अक्रूरेण सह तौ मथुरां आगतवन्तौ।

बालः कृष्णः सिंहासने उपविष्टं कंसं



शिखाग्रहणपूर्वकम् आकृष्य अधः पातितवान्। मुष्टिप्रहारेण मारितवान् च।

अनन्तरं कृष्णः वसुदेव-देवक्योः उग्रसेनस्य च बन्धविमोचनं कृतवान्। उग्रसेनं पुनः सिंहासने उपवेशितवान्।

जरासन्धः कृष्णस्य प्रबलशत्रुः। प्रतीकारम् इच्छन् जरासन्धः त्रयोविंशति–अक्षोहिणी–सैन्येन सह मथुरायाः उपरि आक्रमणं कृतवान्। कृष्णः जरासन्धं पराजितवान्। पराजितः जरासन्धः जीविताशया पलायितवान्।

दुष्टः जरासन्धः यवनम्लेच्छानां राजानं कालयवनं युद्धार्थं प्रेरितवान्। सः कालयवनः विनाकारणं कलहम् उत्पादयन् कृष्णस्य उपरि आक्रमणं कृतवान्।

कृष्णः ततः पलायमानः एकां गुहां प्रविष्टवान्। तत्र मुचुकुन्दः निद्रां करोति स्म।

मुचुकुन्दः इक्ष्वाकुवंशीयस्य मान्धातृ-चक्रवर्तिनः पुत्रः। सः विख्यातः सम्राट् अपि आसीत्।

मुचुकुन्दः देवासुरसङ्ग्रामे देवानां साहाय्यं कृतवान् आसीत्। तुष्टाः देवाः तस्मै वरं दत्तवन्तः। तेन वरेण मुचुकुन्दः मोक्षम् इष्टवान्। देवाः उक्तवन्तः- 'द्वापरयुगे कृष्णावतारस्य दर्शनानन्तरं भवतः मोक्षः सिध्यति'' इति।

तदा मुचुकुन्दः उक्तवान्- ''तर्हि तावत्-पर्यन्तं निद्रां करोमि। एतन्मध्ये यः मम निद्रां नाशयति सः तत्क्षणम् एव भस्मीभवतु'' इति। देवाः तथैव वरम् अनुगृहीतवन्तः।

कृष्णम् अनुधावन् कालयवनः गुहां प्रविष्टवान्। सुप्तं मुचुकुन्दं कृष्णं मन्यमानः पादेन ताडितवान्। निद्राभङ्गात् उत्थितः मुचुकुन्दः तीक्ष्णदृष्ट्या कालयवनं दृष्टवान्। तत्क्षणे एव कालयवनः दग्धः सन् भस्मीभूतः।

अनन्तरं कृष्णः मुचुकुन्दस्य पुरतः प्रत्यक्षः जातः। भवान् बदरिकाश्रमं गत्वा तपः आचरतु। तेन मोक्षः सिध्यति'' इति उक्त्वा तं प्रेषितवान्।

शापग्रस्तौ जयविजयौ स्वतृतीयजन्मनि शिशुपालदन्तवक्त्रनाम्ना कृष्णशत्रुरूपेण जन्म प्राप्त-

वन्तौ। चेदिदेशस्य महाराजस्य दमघोषस्य पुत्रः भूत्वा शिशुपालः जन्म प्राप्तवान्। जातस्य अस्य शिशोः चत्वारः हस्ताः, त्रीणि नेत्राणि च आसन्।

"येन उन्नीतं चेत् शिशोः हस्तद्वयं तृतीयं नेत्रं च अदृश्यं भवति, तेनैव शिशुपालस्य मरणम् अपि भविष्यति" इति अशरीरवाण्या ज्ञाता। शिशुपालस्य माता सात्वती आगतानां सर्वेषां हस्ते स्वशिशुं ददाति स्म। सात्वती कृष्णस्य हस्ते अपि पुत्रं दत्तवती। तत्क्षणम् एव शिशुपालस्य हस्तद्वयं तृतीयं नेत्रं च अदृश्यतां गतम्।

एतत् दृष्ट्वा सात्वती भीता। "शिशुपालेन शतापराधाः कृताः चेदपि सः क्षन्तव्यः" इति सा कृष्णं प्रार्थितवती। "तथैव अस्तु" इति अङ्गीकृतवान् कृष्णः।

कालान्तरे जरासन्धः राजा जातः। सः मथुरायाः उपरि पुनः पुनः आक्रमणं करोति स्म। कृष्णः अपि सर्वदा तं पराजित्य प्रेषयति स्म।

कृष्णः समुद्रं स्थलार्थं प्रार्थितवान्। समुद्रराजः स्थलं दत्तवान्। तत्र समुद्रमध्ये विश्वकर्मणः साहाय्येन कृष्णः विशालां, सुरक्षितां, वैभवोपेतां च द्वारकां निर्मापितवान्। यादवान् सर्वान् तत्र स्थापितवान्।

जरासन्धः अन्तिमतया युद्धार्थं शिशुपाल-दन्तवक्त्र-पौण्ड्रक-साल्वादिभि स्वसहचरैः सह



पुनरपि आक्रमणं कृतवान्।

इतः पूर्वम् एव बलरामेण कृष्णेन च यादवाः मथुराजनाः च द्वारकां प्रापिताः आसन्। एतौ उभौ अपि प्रवर्षणगिरिं गत्वा तस्य शिखरम् अधिरूढवन्तौ।

एतत् दृष्ट्वा कुपिताः जरासन्धादयः प्रवर्षणगिरिं परितः अग्निं ज्वालितवन्तः। कृष्णः तु बलरामेण सह गरुडम् आरुह्य आकाश-मार्गेण द्वारकां प्राप्तवान्।

जरासन्धादयः "कृष्णबलरामौ दग्धौ" इति सन्तोषेण प्रतिगन्तुं सिद्धाः। किन्तु तदा कृष्णेन द्वारकायाम् उद्घोषितः पाञ्चजन्यशङ्ख-ध्वनिः श्रुतः। एतत् श्रुत्वा जरासन्धादीनां मुखं विच्छायम् अभवत्। ते इदानीं परस्परं मुखं

पश्यन्ति !

क्रुद्धः शिशुपालः तत्क्षणम् एव गत्वा मथुरानगरम् अग्नेः आहुतित्वेन समर्पितवान् ।

जरासन्धः द्वारकां वशीकर्तुं नौकया असङ्ख्यसैनिकान् प्रेषितवान् । समुद्रे उत्पन्नेन झंझावातेन सैनिकानां सर्वाः नौकाः जले निमग्नाः । जरासन्धः अपरतीरे स्थित्वा एतत्सर्वं पश्यन् अस्ति । तदा कृष्णः "अये जरासन्ध-महाशय ! द्वारकां जेतुं समुद्रराजः अवकाशं न ददाति एव । मम हस्ते मरणं प्राप्तुं भवतः भाग्यं नास्ति । अन्येन समबलेन वीरेण भवतः मरणं भविष्यति। केषाञ्चित् दिनानाम् अनन्तरम् आवां पुनः मिलिष्यावः ।" इति उक्तवान् ।

विदर्भराजस्य भीष्मकस्य पुत्री रुक्मिणी । सा रूपेण साक्षात् लक्ष्मीः एव । बाल्यतः एव सा कृष्णस्य अद्भुतकार्याणि श्रुतवती । अतः तम् एव मनसि परिणीतवती । "कृष्णः एव मम पतिः" इति वदति स्म अपि ।

रुक्मिण्याः अग्रजः रुक्मः कृष्णस्य शत्रोः पक्षे प्रविष्टः । सः शिशुपालाय एव स्वसहोदरीं दातुं निश्चितवान् । तदर्थं सर्वसिद्धताः अपि कृतवान् ।

रुक्मिणी कृष्णं प्रति– "मां भवान् एव परिणयतु" इति वार्तां प्रेषितवती । विवाहतः पूर्वं सा दुर्गापूजार्थं मन्दिरं गतवती । तत्र आगत्य कृष्णः तां स्वरथे उपवेश्य प्रस्थितः ।

कृष्णम् अवरोद्धुं रुक्मि-जरासन्ध–शिशुपालादयः आगताः। युद्धम् आरब्धम्। इतः बल-रामः सेनया सह आगत्य कृष्णं मिलितवान्। युद्धे शिशुपालादयः सर्वे पराजिताः । रुक्मिः कृष्णस्य बन्धी जातः ।

कृष्णः रुक्मिराजस्य मुण्डनं कारयित्वा श्मश्रु निष्कास्य तं त्यक्तवान् । अपमानितः सः पुनः कदापि कृष्णस्य विरोधं न कृतवान् । द्वारकायां कृष्णरुक्मिण्योः विवाहः महता वैभवेन सम्पन्नः ।





# धर्मो रक्षति रक्षितः

एमन् देशे सानानगरं राजा मुबारकः परिपालयति स्म । तरुणः सः अविमृश्यकारी । प्रजानाम् अपराधम् अविचार्य एव दण्डयति स्म । तेन निरपराधिनः अपि दण्ड्यन्ते स्म । अतः सर्वे अपि राज्ञा सह जागरूकतया व्यवहरन्ति स्म ।

एकदा राजा मृगयाविहारार्थम् अरण्यं गतवान् । तेन सह केचन भटाः, आप्तसेवकः सलीम् अपि प्रस्थितवन्तः । मृगयां विहरन् राजा हरिणम् एकं दृष्टवान् । अनुक्षणम् एव हरिणं लक्ष्यीकृत्य बाणं प्रयुक्तवान् । किन्तु हरिणः उत्प्लुत्य अधावत् । तेन हरिणः बाणात् च्युतः अभवत् ।

क्रुद्धः राजा भटान् आज्ञापितवान्– 'तम् एतं हरिणं गृह्णन्तु' । भटाः वृक्षेषु निलिनाः सन्तः धावितुं प्रवृत्ताः । किञ्चित् दूरे धावन्तं हरिणं दृष्ट्वा तं राज्ञः अभिमुखं परावर्तितवन्तः । एतस्मिन् समये आप्तसेवकः सलीमः हरिणम् उद्दिश्य बाणं मुक्तवान् । लक्ष्यात् च्युतः बाणः हरिणाभिमुखं आगच्छतः राज्ञः कर्णं रन्ध्रीकृत्य अगच्छत् ।

'एतस्य शिरः छिद्यताम्' इति क्रुद्धः राजा भटान् आज्ञापितवान् ।

सलीमः राज्ञः अग्रे जानुना उपविश्य सविनयं प्रार्थितवान्– 'महाप्रभो ! क्षम्यताम् ! पलायमानं हरिणम् उद्दिश्य बाणं मुक्तवान् । लक्ष्यात् च्युतः बाणः अभिमुखम् आगतस्य भवतः कर्णे पतितः । अकस्मात् एषः प्रमादः संवृत्तः । अतः दयया मां क्षाम्यतु । तेन च तृप्तः देवः कदाचित् विपत्तौ भवन्तम् अपि रक्षेत् ।'

एतया प्रार्थनया राज्ञः हृदयं करुणया आर्द्रम्

"अरेबिया कथा"



अभवत्। अतः सः तस्य शिरश्छेदं न कारितवान्। सर्वे अपि आनन्देन नगरं प्रतिनिवृत्तवन्तः। किन्तु परस्मिन् दिने एव सलीमः कुत्रापि न दृष्टः।

वर्षद्वयम् अतीतम्। समुद्रमध्ये स्थितस्य कस्यचित् द्वीपस्य अपि एषः मुबारकः एव अधिपतिः आसीत्। सः प्रतिवर्षम् अपि तत्र गत्वा आगच्छति स्म। एतस्मिन् वर्षे अपि नौकया गन्तुं प्रस्थितवान्। किन्तु चण्डमारुतेन उत्पन्नैः बृहत्तरङ्गैः जलमध्ये तस्य नौका निमग्ना।

जले पतितः राजा काष्ठखण्डम् गृहीत्वा एकं दिवारात्रं समुद्रे प्लवमानः आसीत्। एवं प्लवमानः अन्ते कस्यापि द्वीपस्य तीरं प्राप्तवान्।

शनैः शनैः उत्थाय राजा परितः दृष्टवान्। तत्र कोऽपि न दृष्टः। अतः सः दुर्गस्य अभिमुखं प्रस्थितवान्।

अज्ञाते एतस्मिन् राज्ये कोऽपि परिचितः न आसीत्। राज्ञः तस्य केशाः विकीर्णाः। धृतानि वस्त्राणि अपि छिन्नानि। सः भिक्षुकः इव दृश्यते स्म। अतः 'अहं राजा' इति स्वयम् उक्तं चेत् अपि कोऽपि तं न विश्वसिति। बुभुक्षया बहुश्रान्तः च। 'सद्यः किं करणीयम्' इति चिन्तयन् दुर्गस्य पार्श्वे एकस्यां शिलायाम् शयनं कृतवान्। श्रान्त्या अनुक्षणम् एव निद्रा समागता। निद्रावस्थायाम् एव तेन पादप्रहारवेदना अनुभूता। झटिति एव उत्थाय सः परितः दृष्टवान्।

'एषः किमर्थं मारितः' इति शवम् एकं प्रदर्श्य भटाः राजानं पृष्टवन्तः।

राजा मुबारकः शवं दृष्ट्वा आश्चर्येण उक्तवान्– 'एषः मया न मारितः। इदमिदानीं शवं पश्यन् अस्मि। अहम् अत्रत्यः अपि न। समुद्रे अकस्मात् पतितः, प्लवमानः तीरं प्राप्तवान्। एतस्य वधस्य मम च सम्बन्धः नास्ति'।

'एतत् सर्वं राज्ञः अग्रे निवेदयतु' इति वदन्तः ते स्वराजस्य समीपे तं नीतवन्तः। 'श्वः एतस्य व्यवहारं पश्यामि' इति उक्त्वा राजा मुबारकं कारागृहं प्रवेशितवान्।

मुबारकः चिन्तितवान्–'अहो! मम शिरश्छेदनार्थं राजा न आज्ञापितवान्। अहं चेत् अविचार्य शिरश्छेदनाज्ञाम् कुर्याम् एव। हन्त! पूर्वं मया कति निरपराधिनः शूलम् आरोपिताः !!'

कारागृहे एकः गवाक्षः आसीत्। गवाक्षस्य पार्श्वे एकः काकः उपविश्य रटति स्म। एतत् श्रुत्वा क्रुद्धः मुबारकः काकम् उद्दिश्य पाषाणखण्डम् एकं क्षिप्तवान्। लक्ष्यात् च्युतः पाषाणखण्डः बहिः पतितः।

'हन्त! शीघ्रकोपतः इदानीम् अपि अहं न मुक्तः' इति मुबारकः मनसा चिन्तितवान्।

द्वित्राः निमेषाः अतीताः। भटाः कारागृहस्य द्वारम् उद्घाट्य अन्तः आगताः। मुबारकस्य पाणिद्वयं पादद्वयं च बलात्कारेण गृहीत्वा बहिः क्षिप्तवन्तः।

क्षिप्तः मुबारकः बहिः स्थितानां तरुणानां मध्ये पतितः। तेषु युवराजः अपि आसीत्। मुबारकेण क्षिप्तः पाषाणखण्डः युवराजस्य वामकर्णे पतितः आसीत्, येन जातात् क्षतात् रक्तं स्रवति स्म।



युवराजः मुबारकं दृष्ट्वा दन्तान् निष्पीडयन् भटान् आज्ञापितवान्– 'मदोन्मत्तस्य एतस्य शिरः छिद्यताम्'।

भूमौ पतितं मुबारकं भटाः उत्थाप्य नेतुं प्रवृत्ताः। 'तिष्ठन्तु!' इति वदन् युवराजः मुबारकस्य समीपम् आगतवान्। मुबारकस्य वामकर्णं गृहीत्वा परीक्षमाणः युवराजः पृष्टवान्– 'एतस्मिन् कर्णे किम् एतत् बृहत् रन्ध्रम्?'

मुबारकः युवराजं नमस्कृत्य उक्तवान्– 'युवराज! काकम् उद्दिश्य क्षिप्तः पाषाणखण्डः भवतः कर्णे अकस्मात् पतितः। तथैव केनापि तरुणेन मुक्तः बाणः अकस्मात् मम कर्णे पतितः, येन एतत्

बृहत् रन्ध्रम् अभवत्'।

'सः तरुणः कथंकारं दण्डितः' इति पृष्टवान् युवराजः।

'सः तरुणः न दण्डितः, मया क्षान्तः' इति उक्तवान् मुबारकः।

'अहम् अपि तथा एव क्षन्तव्यः इति इच्छति ननु मुबारकमहाराज!' इति पृष्टवान् युवराजः।

युवराजेन उक्तं स्वकीयं नाम श्रुत्वा मुबारकः आश्चर्यचकितः भूत्वा तस्य मुखं दृष्टवान्। पूर्वं आप्तसेवकः यः सलीमः, सः एव एषः युवराजः इति अभिज्ञातवान्।

युवराजः मुबारकं प्रीत्या आलिङ्ग्य उक्तवान्– राजन्! मां भवान् अभिज्ञातवान् इति भवतः मुखभावेन एव ज्ञायते। भवतः आप्तसेवकः सलीमः एव अहम्। पूर्वं कदाचित् पित्रा सह अहं कलहं कृतवान्। तन्निमित्तं अहं मम देशं त्यक्त्वा भवतः राज्यं प्रविष्टवान्। तत्र सञ्चारं कुर्वन् उद्योगावकाशं प्रतीक्षमाणः आसम्। दैववशात् भवतः आस्थाने उद्योगं प्राप्तवान्, आप्तसेवकः च अभवम्। पिता मम अन्वेषणे मग्नः आसीत्। तेन सर्वत्र गुप्तचराः प्रेषिताः। तथा प्रेषिताः गुप्तचराः माम् अन्विष्य उक्तवन्तः– 'युवराज! भवतः पित्रा प्रेषिताः गुप्तचराः वयम्। पिता भवन्तं स्मृत्वा बहु खिद्यति। कृपया अस्माकं राज्यम् आगच्छतु। पितरं च समाश्वसितु' इति। एतां वार्तां श्रुत्वा भवन्तम् अनिवेद्य एव त्वरया एतं देशं आगतवान्' इति।

राजा मुबारकः सन्तोषस्य पारं गतवान्। युवराजः तं स्वपितुः समीपे नीत्वा प्रवृत्तं सर्वं निवेदितवान्। अनन्तरं राजोचितं सम्माननं कृत्वा, बहुमूल्यानि उपायनानि च दत्वा महानौकया युवराजः मुबारकं स्वराज्यं प्रतिप्रेषितवान्।



# चिन्तारहस्यम्

जगन्नाथः एकः निर्धनः । तथापि सः सर्वदा प्रसन्नः उत्साही च । किन्तु एषु दिनेषु सः उदासीनः चिन्तामग्नः च दृश्यते स्म ।

एतत् दृष्ट्वा आश्चर्यचकितः स्नेहितः सोमनाथः पृष्टवान्– "किं भोः मित्र ? अकस्मात् भवान् एवं परिवर्तितः" इति ।

जगन्नाथः दीर्घं निश्वसन् उक्तवान्– 'भवन्तं प्रति एतत् विषयं निवेदयामि' इति चिन्तितवान् आसम् । किन्तु विस्मृतवान् । एतावत्पर्यन्तम् अहं निर्धनः आसम् । अतः काऽपि-चिन्ता न आसीत् । किन्तु एतन्मध्ये मम मातुलः मृतः । तस्य पुत्रादयः न सन्ति । अतः तस्य द्विलक्षमिता सम्पत्तिः मम वशे आगता । दशदिनेभ्यः पूर्वं समीपग्रामवासिनी अन्या मातुलानी अपि मृता । तस्याः पतिः पूर्वम् एव दिवङ्गतः । पुत्राः अपि तस्याः न सन्ति । अतः तस्याः लक्षमिता सम्पत्तिः अपि मम एव वशे आगता" इति ।

तदा सोमनाथः आश्चर्येण पृष्टवान्- "एतावती सम्पत्तिः निरायासं प्राप्ता इति सन्तोष्टव्यम् । भवान् तु पुनः किमर्थं चिन्तामग्नः?" इति । जगन्नाथः दीर्घं निश्वसन् पुनः उक्तवान्– "इतःपरं मम बान्धवेषु निस्सन्तानः कोऽपि नास्ति किल ?" इति ।



## चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/-रूप्यकाणि ।

विजितां शीर्षिकां सप्टम्बरमासस्य सञ्चिकायां प्रकटयिष्यामः ।





❀ उपरितनं चित्रद्वयं पश्यन्तु । तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु । अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः । ❀ स्पर्धायां विजेता ५०/– रूप्यकात्मकं पारितोषिकं प्राप्नोति । ❀ शीर्षिकाः समपत्रे (पोस्ट-कार्ड) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः । ❀अधोनिर्दिष्ट-सङ्केतस्य कृते शीर्षिकाः प्रेषणीयाः–

चन्दमामा (संस्कृतम्)
७३/२'अक्षरम्' रङ्गराववमार्गः, शङ्करपुरम्, बेङ्गलूरु–५६०००४

---

**'मे' मासस्य चित्रशीर्षिकास्पर्धा–परिणामः —**

प्रथमचित्रम्–उदरनिमित्तं स्वीकृतवेशः ।

द्वितीयचित्रम्–मस्तकभारः अपि सन्तोषः ।

प्रेषकः—के. जानकीराम शास्त्री, २-९७, वाणीनगर, मल्काजगिरि, हैदराबाद-४७

## (भवन्तः जानन्ति वा ? (उत्तराणि)

१. फ्रान्स् देशस्य रेने फ्राङ्कोयिस् सल्लीप्रुधोमः । २. फ्रान्सदेशवासी हेन्री, ड्यूरेण्टः ३. जर्मनदेशोत्पन्नः हिल् हेल्म् कोन्राड्रोण्टजन् । ४. हालेण्ड्देशीयः जाकोबस् हेण्ड्रिकस् वाण्टहाफ् । ५. जर्मन्देशस्यः एमिलवान् बेह्रिंग ः।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिन-शब्दानां सान्दर्भिकः अर्थः

| | | | |
|---|---|---|---|
| विकलाङ्गः | Handicapped | भाटकार्थं | For hire |
| काणा | One-eyed lady | भापितवान् | Terrorised |
| पङ्गुः | Lame | खल्वाटः | Bald headed |
| बालिशः | Childish | लुण्ठकः | Robber |
| प्राप्तवयस्कः | Right aged | जामाता | Son-in-law |
| कृपणः | Miser | तालबद्धम् | Locked |
| अयोगोलम् | Ball of iron | चटुलः | Naughty |
| लुण्ठयति | Robs | उलूखलम् | Mortar |
| गर्तः | Pit | मुसलधारा-वृष्टिः | Heavy rains |
| धर्मविधुरः | Opposed to law | कनिष्ठिका | Little finger |
| धृष्टता | Boldness | मुण्डनम् | Tonsure |
| जरठः | Old | मृगया | Hunt |
| श्मश्रु | Moustache | गवाक्षः | Window |
| शोभायात्रा | Procession | शाखा | Branch |
| कर्परः | A Piece of pot | सम्मार्जनी | Broom Stick |
| अतिवक्ता | Talkative | अभिज्ञः | One who knows |
| चतुष्पथः | Circle | | |

# मित्र - सम्भाषणम्

| | |
|---|---|
| सुरेशः–नमस्ते, गोपाल ! | Good morning, Gopal. |
| गोपालः–नमो नमः । कुशलं वा ? | Good morning, how are you ? |
| सु– सर्वं कुशलम् । किं भोः, भवतः दर्शनम् एव नास्ति । | All is well, you are not to be seen these days. |
| गो– परीक्षार्थं पठन् आसम् । | I was preparing for the exams. |
| सु– परीक्षा समाप्ता वा ? | Are the exams over ? |
| गो– आम्, गतसप्ताहे एव समाप्ता । | Yes, they concluded last week. |
| सु– ह्यः अहं भवन्तं स्मृतवान् । मम माता अपि पृष्टवती–"गोपालः कुत्र ?" इति । | I thought of you yesterday. Even my mother asked, "where is Gopal." |
| गो– कः विशेषः ? | What is the matter ? |
| सु– विशेषः कोऽपि नास्ति । एवमेव स्मरणे आगतम् । इदानीं मम गृहं गच्छामः वा ? | Nothing, I just thought of you. Shall we go home now ? |
| गो– इदानीं वा ? समयः नास्ति भोः । | Now ? Sorry, I've now no time. |
| सु– किम् अस्ति अन्यत् महत्कार्यम् ? | Have you anything else to do ? |
| गो– अहं मम भगिनीगृहं गच्छन् अस्मि । तत्र भगिनी मम प्रतीक्षां करोति । | Yes, I am going to my sister's house. She is waiting for me. |
| सु– तर्हि कदा आगमिष्यति मम गृहम् ? | In that case when do you think you can come ? |
| गो– आगच्छामि कदाचित् । | I will come some other time. |
| सु– तथा न, श्वः आगमिष्यति वा ? | Not like that. Can you come tomorrow ? |
| गो– प्रयत्नं करोमि । | I shall try. |
| सु– श्वः आगन्तव्यम् एव । सायं पञ्चवादने भवतः प्रतीक्षां करोमि । | You should come tomorrow unfailingly. I will be waiting for you at 5 O'clock. |
| गो– अस्तु, यानम् आगतम् । पुनर्मिलामः । | Okey, the bus has arrived. Let us meet again. |

# प्राचीन भारतस्य भव्यता तथा तेजस्विता चन्दमामायां




# चन्दमामा

**चन्दमामायाः** लोकप्रियतायाः एकमात्रं प्रमाणं यत् प्रतिमासम् अस्याः पाठकाः १,२०,००,००० बालकाः सन्ति ।

**चन्दमामायाः** प्रसारसंख्या सामान्यतः ८,००,००० अस्ति या प्रतिमासं भारतस्य तथा पूर्वएशियादेशाणां कुटुम्बान्, पाठशालाः तथा पुस्तकालयान् च प्राप्नोति ।

प्रत्येकमासस्य कथासु दर्शितम्
अस्ति भारतस्य सर्वाधिक
प्रचारिता बालानां मासिकी